.

# भारतीय ज्ञानपीठ काशी

## ज्ञानपीठ-ग्रन्थागार

"णाणं पयासयं"

कृपया—

( १ ) मैले हाथोंसे पुस्तकको स्पर्श न कीजिये। जिल्दपर काग़ज़ चढ़ा कीजिये।

( २ ) पन्ने सम्हाल कर उलटिये। थूकका प्रयोग न कीजिये।

( ३ ) निशानीके लिये पन्ने न मोड़िये, न कोई मोटी चीज़ रखिये। काग़ज़का टुकड़ा काफ़ी है।

( ४ ) हाशियोंपर निशान न बनाइये, न कुछ लिखिये।

( ५ ) खुली पुस्तक उलटकर न रखिये, न दोहरी करके पढ़िये।

( ६ ) पुस्तकको समयपर अवश्य लौटा दीजिये।

"पुस्तकें ज्ञानजननी हैं, इनकी विनय कीजिये"

जैनविविधसाहित्यशास्त्रमाला ( ७ )

महोपाध्यायश्रीमेघविजयगणिविरचितं

नैषधीयसमस्यापूर्त्तिरूपं

# शान्तिनाथचरित्रम् ।

राजधन्यपुरनिवासिश्रेष्ठिवर्यत्रिकमचन्द्रतनुजेन
कलिकाताविश्वविद्यालये संस्कृतप्राकृता-
ध्यापकपरीक्षकेण न्याय व्याकरण-
तीर्थोपाधिकेन पण्डित—

## हरगोविन्ददासेन

परिष्कृत्य संशोधितम् ।

वीरसंवत् २४४४ ।

मूल्यमेको रूप्यकः ।

Jaina Vividha Sáhitya Shástramálá (7)



# SHANTINÁTHA-CHARITRA

(Naishadhiya-Samasyápúrti)

OF

## MAHOPÁDHYÁYA SHREE MEGHA VIJAYJI.

*EDITED BY*

Pandit HARGOVIND DAS T SHETH, NYAYA-VYAKARANTIRTH,
Calcutta University Lecturer in Sanskrit.

1918.

*Price one Rupee*

# प्रस्तावना ।

अस्य शान्तिनाथचरित्रनाम्नो ग्रन्थस्य प्रणेतारस्त एव महोपाध्यायश्रीमेघविजयगणयः, येषां सत्तासमय-तत्तद्ग्रन्थविनिर्माणादिकं वृत्तान्तं तैरेव विरचितस्य, एतस्यामेव च जैनविविधसाहित्यशास्त्रमालायां तृतीयाङ्करूपेण प्राकाश्यमुपनीतस्य सप्तसंधानमहाकाव्याभिधानस्य ग्रन्थस्य प्रस्तावनायामहं न्यरूपयम , इति पुनरत्र तदुल्लेखमकृत्वा प्रस्तुतग्रन्थविषयमेव किञ्चिद् वक्तुमुचितमुत्पश्यामि ।

अस्मिन् ग्रन्थे महाकविश्रीहर्षप्रणीतस्य सुप्रसिद्धस्य नैषधीयमहाकाव्यस्य समस्यापूर्त्तिद्वारा भगवतः श्रीशान्तिनाथस्य जन्मतः प्रभृति निर्वाणावसानं चरित्रं सुललिततया व्यावर्णितम् । अत एव प्रतिसर्गं प्रान्तभागे "इति श्रीनैषधीयमहाकाव्यसमस्यायाम्"-इत्यादि वदता ग्रन्थकर्त्राऽस्य "नैषधीयसमस्या" इत्यप्यभिधानं व्यधायि ।

मेघदूतादिसमस्यायामिव चात्र न केवलस्तत्रत्योऽन्यस्तदन्यो वैक एव पादः प्रतिश्लोकं गृहीतः, किन्तु तत्रत्यप्रत्येकश्लोकस्य चतुरोऽपि पादाननुक्रममादायाऽत्र प्रतिश्लोकमेकैकपादो

१ केवलमत्र नैषधीयाष्टाविंशस्य श्लोकस्य चतुर्थपादस्य पूर्त्तिर्नोपलभ्यते, तत्र ग्रन्थकारस्य तदप्रणयनं वा, विशेषतो लेखकस्य प्रमादेन तत्त्यागं वा विहाय किमन्यत् कारणमभिधातुं शक्यते ! ।

यथास्थानं विनिवेशितः, क्वापि क्वापि चैक एव पादो द्विस्त्रिर्वाऽऽवर्त्य भिन्नाभिन्नार्थभङ्गीकेषु श्लोकेषूपनिबद्धः। एवं च संपूर्णस्य प्रथमसर्गस्य पादपूर्त्तिमधिकृत्य षट्सु सर्गेषु विभज्य ग्रन्थमेनं समाप्तिमनयद् ग्रन्थकारः।

प्रतिश्लोकमिह समस्यारूपेणोपात्तस्य नैषधीयपादस्य भेदेनोपलक्षणाय लघ्वक्षरेषु मुद्रणं विहितम्। यद्यपि समस्यापादानामेषामत्रत्यानां निर्णयसागरीयनैषधीयपुस्तकस्थानां च परस्परं क्वचित्पाठभेदोऽपि दृश्यते, यथा नैषधीये "दिगङ्गनाङ्गाभरणं रणाङ्गणे" (श्लो० १२), अत्र च "दिशां गणस्याभरणं रणाङ्गणे" (स० १, श्लो० ४८); एवं नैषधीये "कुतः परं –" (श्लो० २४) अत्र तु "अतः परं –" (स० १, श्लो० ९९) इत्यादिः, तथाप्यत्रत्यानां केषाञ्चिद् भिन्नपाठानामुल्लेखस्तत्र नैषधीयपुस्तके क्वचिट्टीकायां कुत्रचिच्च टिप्पण्यां पाठान्तररूपेण कृतो लोचनगोचरीभवति, यथा "न शारदः पार्वणशर्वरीश्वरः" (स० १, श्लो०

१ क्वचिच्च पादस्थानस्यापि व्यत्ययेन निबन्धो ऽत्र विलोक्यते; यथा, नैषधीयस्य (श्लो० ६१) द्वितीयपादोऽत्र (स० २ श्लो० ११९) तृतीयपादरूपेण, नैषधीयस्य (श्लो० १०१) तृतीयपादोऽत्र (स० ४ श्लो० ३५) प्रथमपादात्मना, नैषधीयस्य (श्लो० १०९) द्वितीय पादोऽत्र (स० ४, श्लो० ९९) तृतीयपादस्वरूपेण निबद्धः। २ द्रष्टव्यानि पृष्ठानि २९, ४०, १५३। ३ क्वचित्समस्यापादरहितोऽपि श्लोको विलोक्यते, यथा स० २, श्लो० १०३। ४ नैषधीयपुस्तके "न शारदः पार्विकशर्वरीश्वरः" (श्लो० २०) इति पार्वणपदस्य स्थाने पार्विकशब्दोऽपि, टीकायां तु सोऽपि निर्दिष्टः।

८१ ): "विशिष्य सा भीमनरेन्द्रनन्दिनी ( स० २, ७ ) "निवेशितं दृशमियेव नैषधं." ( स० २, ६६ ) "पुरोपकण्ठं स वनं किलेक्षितं" स० २, ६६ इत्यादि। एतेन समस्यापूर्त्तौ गृहीतानां भिन्नपाठानामपि संवादः, ग्रन्थकारसमयेऽधिकतरः प्रचारोऽपि च सुश्लोकाभिधानो भवति।

यस्तु "स्मरग्नि"-( नै० श्लो० ४५ ) इत्यस्य स्थाने "स्मरं ग्नि"-( स० २, श्लो० ५६ ) इति, "त्रपासरि"-( नै० श्लो० ४८ ) इत्यस्य स्थाने "त्रपाः सरि"-( स० २, श्लो० ६७ ) इत्यादावनुस्वारविसर्गयोरतिरेकः; यश्च "नलः" ( नै० श्लो० ४७ ) इत्यस्य स्थाने "नरः" ( स० २, श्लो० ६४ ) इत्यादौ लकाररकारयोर्भेदः; यत्र पुनः "शम्बर"-( नै० श्लो० ५३ ) इत्यस्य स्थाने "संवर"-( स० २, श्लो० ८७ ) इत्यादौ च बवयोरैक्यमत्र दृश्यते, तत् सर्वमपि

"यमकश्लेषचित्रेषु बवयोर्डलयोर्न भित्।
नानुस्वारविसर्गौ च चित्रभङ्गाय सम्मतौ॥"

( सा० द० )

इति वचनाद् न मनागपि दोषावहं भवतीति प्रायः प्रातीतिकमेतत् साहित्यार्णवावगाहिनां सहृदयानाम्।

१ नैषधीयपुस्तके ( श्लो० ३३ ) "नन्दिनी"-स्थाने 'नन्दना' इति, टिप्पण्यां तु 'नन्दिनी' इत्यपि। २ नैषधीयपुस्तके ( श्लो० ५५ ) "नैषधः" इत्यस्य स्थाने "निर्जनम्" इति पाठः, टिप्पण्यां तु सोऽपि। ३ नैषधीयपुस्तके "पुरोपकण्ठोपवनं किलेक्षिता" ( श्लो० ५६ ) इति पाठः, टिप्पण्यां त्वन्योऽपि।

अस्य ग्रन्थस्यादर्शपुस्तकमेकं प्रायः शुद्धं शास्त्रविशारदजैनाचार्यश्रीविजयधर्मसूरीणामवापमिति कृतज्ञोऽस्मि तेषाम् । पुस्तकस्यास्य प्रान्तभागे

"समस्यास्य शास्त्रस्य सत्तत्त्वधरस्य कृता नूतना पाठकैः पाठकार्थैः ।
सुपार्श्वगणभृच्छात्ररत्नाभिधेन समुत्पादिता सत्प्रतिः सुन्दरीयम् ॥"

इति लेखकनामगर्भं श्लोकमिममन्तरेण नान्यः कश्चिल्लेखनसमयाद्युल्लेखो वर्तते, तथापि जीर्णत्वादिना तस्याः प्राचीनत्वं यावद्ग्रन्थकारसमसमयभावित्वं विभाव्यते ।

अत्र च पुस्तके समुपलब्धमितस्ततो व्यस्ततयोल्लिखितं टिप्पनकं यथास्थानं विनिवेश्य कतिपयपंक्तिस्थलेषु तत्रानुपलब्धमपि स्वत उपनिबध्य च यथाशक्त्यस्य संशोधनकर्मणि विहितप्रयत्नोऽपि यत्र क्वचन मतिमान्द्यतः प्रमादतो वा स्खलितोऽभवम्, तत्र कृपापरीतचेतसः सहृदयान् क्षमां याचमानो विरमामि–

हरगोविन्दः ।

महोपाध्यायश्रीमेघविजयगणिविनिर्मितं

नैषधीयमहाकाव्यसमस्यारूपं

# श्रीशान्तिनाथचरित्रम् ।

[१]श्रियामभिव्यक्तमनोऽनुरक्तता
  विशालसालत्रितयीश्रिया स्फुटा ।
तया बभासे स जगत्त्रयीविभु-
  र्ज्वलत्सनाभावलिकीर्त्तिमण्डलः ॥१॥

निपीय यस्य क्षितिरक्षिणः कथाः
  सुराः सुराज्यादिसुखं बहिर्मुखम् ।
प्रपेदिरेऽन्तःस्थिरतन्मयाशयाः
  सदा सदानन्दभृतः प्रशंसया ॥२॥

१ श्रियाम अभिव्यक्तं=शुद्धं मन उज्ज्वलं, श्रियां धवलत्वं पवित्रत्वात्, तत्र अनुरागः=प्रणयः, स रक्तः। एवं च सित-पीतयोरैक्यात् पीतत्वमपि सूचितम्, वप्रत्रये रूप्यहेमरत्नमये वर्णत्रयं स्यादेव। 'श्रियां' इति बहुत्वं जिने सर्वज्ञत्वेन सर्वश्री-णामनुरागसूचकम्। 'आम्' इति मन्त्रपदसूचकम्।

यथा श्रुतस्येह निपीततत्कथा-
स्तथाऽऽद्रियन्ते न बुधाः सुधामपि ।
सुधाभुजां जन्म न तन्मनःप्रियं
भवेद् भवे यत्र न तत्कथापथा ॥३॥

यदीयपादाम्बुजभक्तिनिर्भरात्
प्रभावतस्तुल्यतया प्रभावतः ।
नलः सितच्छत्रितकीर्त्तिमण्डलः
क्षमापतिः प्राप यशःप्रशस्यताम् ॥४॥

द्विधापि धर्मानुगतिर्महीपति-
र्दृढावधेः शैशव एव सावधिः ।
क्रमेण चक्री विजये दिशां जिनः
स राशिरासीन्महसां महोज्ज्वलः ॥५॥

रसैः कथा यस्य सुधानधीरिणी
कृता सकृत् कृन्तति दुष्कृतं नृणाम् ।

१ सूर्यस्य । २ "धर्मो यमोपमापुण्यस्वभावाचारधन्वसु ।
सत्सङ्गेऽर्हत्यहिंसादौ न्यायोपनिषदोरपि ॥"

३ अवधिः=अवधिज्ञानम् । ४ महैः=उत्सवैः, उज्ज्वलः,
"उज्ज्वलस्तु विकासिनि श्रृङ्गारे विशदे दीप्ते" हे० ।

हिमाद्रिजाता लहरी नभस्वतः
क्षमातले तापमिवागता स्वतः ॥६॥
अमुष्य संसेवनया नयाश्रयाद्
नलः स भूजानिरभूद् गुणाद्भुतः ।
रयात् समुत्तीर्य दुरोदरादराद्
दुरापदं चन्द्र इव ग्रहोदिताम् ॥७॥
स वर्णनीयस्तत एव लक्षणै-
र्विचक्षणैः संप्रति संनिधानतः ।
सुवर्णदण्डैकसितातपत्रित-
प्रभावकीर्त्योर्जनचित्तचित्रितः ॥८॥
रसाद्दशास्योऽप्यदसीयमेवने-
ऽवनेः प्रभुर्भास्वरकान्तिभास्करः ।
बभूव भूवल्लभदेवजित्वर-
ज्वलत्प्रतापावलिकीर्त्तिमण्डलः ॥९॥
पवित्रमत्रातनुते जगद् युगे-
ऽभिधा विधानैर्बहुधा स्मृता विभोः ।

१ ग्रहणजाताम् । २ अद्यापि लोके स्मरणीयः ।

अरिष्टशान्तेर्नलिनीशपेशल-
द्युतेः मतेजोऽनुभवेन संगतेः ॥१०॥
बहुश्रुतानां वदनादनाश्रवैः
श्रुता रसक्षालनयेव यत्कथा ।
ददाति सोच्चैःश्रवसो नियोजना-
ज्जनेऽनिमेषाद्विबुधाक्रियां शुचिम् ॥११॥
समाधुरीका न कटुः श्रुतावपि
निशामनाद् याऽन्तरकश्मलापहा ।
कथं न सा मद्गिरमाविलामपि
न शोधयेन्नाथकथा यथाम्भिथना? ॥१२॥
यथाऽऽख्यया भव्यनृणां शुचीकृतं
स्मृतेर्मनो भावनया जगद्गुरोः ।
इयं विशेषात् प्रतिभां कथं न मे
स्वसेविनीमेव पवित्रयिष्यति ? ॥१३॥
अधीतिबोधाचरणप्रचारणैः

---

१ अन्यत्र आश्रवेऽलग्नमनोभिः सावधानैरित्यर्थः । २ उच्चैः-श्रवाः=अश्वः, उत्कर्णता च । ३ विबुधाः=देवाः, पण्डिताश्च । ४ "निशमनं निशामनं निरीक्षणश्रवणयोः" इत्यने० ।

श्रुताम्बुधिर्ज्ञानगभीरनीरवान्
प्रभुर्विहारेण चतुर्दिगन्तरे ।
विमोहपङ्कं कुरुते स्म दूरतः ॥१४॥

नयेष्वधीत्याचरणानयेन स
दशाश्रनस्रः प्रणयन्नुपाधिभिः ।
रमाधिकत्वाद् द्विगुणत्वमादधे
चतुर्दशामंस्नत एव तत्प्रभाः ॥१५॥

स नैषधीभावमुपेत्य भूभुजां
व्रजस्य रेमे हृदि तद्गुणस्पृशि ।
चतुर्दशत्वं कृतवान् कुतः स्वयं
निजात्मनाऽनन्तविबोधनेऽधिकः ॥१६॥

प्रभामयीं स्वीयपुरीं तथाऽतनोत्

१ सप्तनयेषु षड्दर्शनरूपेषु द्वादशत्वं रमाधिकत्वे १४ । २ निषधा हि नगरी कोशलदेशाश्रिता, कोशलो हि देशः सर्वेषु मुख्यः, अयोध्याश्रितत्वात्, तेन नैषधीभावं श्रीऋषभदेवभाव-मित्यर्थः । "निषधस्तु कठिने पर्वतेश्वरे देशतद्राजयोश्चापि" इत्यनेकार्थः । ३ कौमारे राज्ये चक्रिभावे तीर्थंकरत्वे च प्रत्येकं पञ्चविंशतिसहस्रवर्षभोगाच्चतुर्दशत्वेति ।

पुरा जिनोऽर्हत्स्वपि पूर्वचक्रभृत् ।
जनो न यस्यामितिगीरदः [1]पदं
न वेद्मि विद्यासु चतुर्दशस्वयम् ॥१७॥
अमुष्य विद्या रसनाग्रनर्तकी
भविष्यतीत्येव विमर्शपूर्वकम् ।
विधिः पुरे तानुदपादि सज्जनान्
प्रबोधशुद्धाम्बुधिजातमज्जनान् ॥१८॥
पुरन्दरस्यापि पुरा पुरा मखी
त्रयीव नीताऽङ्गगुणेन विस्तरम् ।
[2]संसंहिताऽप्याह्नि[3]कवृत्तिसोदया
पुरी स्वशाखा[4]बहुलद्विजा[5]श्रया ॥१९॥
चतुर्दशत्वं दधती शुभाश्रमै-
स्तथैव वर्णैः[6] ककुभो जनागमैः ।
अगाहताष्टादशतामपीप्सया

१ पदं=स्थलमधिकारं वा। २ ससंहिता=वेदपाठः, पक्षे लोकानां परस्परं सांगत्यं च। ३ आह्निकम्=अधिकारविशेषः, वृत्तिः=प्रतिदिनमाजीविका तया सोदया=उदयवती। ४ शाखा=वेदशाखा वृक्षशाखा च। ५ द्विजाः=पक्षिणः, विप्राश्च। ६ चतुर्भिः। ७ षड्भिः।

पृथग्देशाशाजनरङ्गसंगमैः ॥२०॥
अनेकवस्तुप्रचयैर्नृपस्तुतैः
स्ववास्तवैः प्राज्ञजनस्य मंस्तवैः ।
पुरी सुरीणां रमणीयतां ययौ
नवद्वयद्वीपपृथग् जयश्रियाम् ॥२१॥
दिगीशवृन्दांशविभूतिरीशिता
जनस्य सर्वस्य सुशिक्षया पिता ।
पितामहस्तत्र बभूव भूरिभा-
प्रशास्ति यां शान्तिविभोः पिता पुरीम् ॥
विवेचने वा वचनेऽवनेऽथवा
दिशां स कामप्रमशात्रगाधिनीम् ।
प्रवृत्तिमाधाय धिया नयाश्रयां
स्ववर्गाधिशांधिप्रभुतां दधेऽधिपः ॥२३॥
प्रतिप्रभातान्ध्ययनैर्नवैः स्तवै-
र्जिनेन्द्रपूजाजनने महोत्सवैः ।

१ पट्स्थाने दशदिशां गणनात् आश्रमाः ४ वर्णाः ४ एव १८ । २ तच्छन्देन शिक्षा तत्र निपुणं मुखम्, पक्षे विधिः । ३ विश्वसेनः ।

बभार शास्त्राणि दृशं द्वयाधिका-

मतुल्यकुल्याचरणैः पुरीजनः ॥२४॥

त्रिधा प्रभासं-गतमस्ति हस्तिना-

पुरं पुरन्ध्रीजनविश्वरञ्जनम् ।

दृशं दधे गोर्धिकृतामिहावमन्

निजत्रिनेत्रावतरत्वबोधिकाम् ॥२५॥

पदैश्चतुर्भिः सुकृतैः स्थिरीकृते

पुरे विशङ्कोऽपि न कोऽपि तामयात् ।

सविद्रुमाभे भवने वनेऽपि वा

दिवानिशं दैवनतः सभावनः ॥२६॥

जनेन यूना विषयप्रयोजने

---

१ कुल्यं=कुलोचिताचारः, पक्षे कुल्या नदी तदाचरणैः शास्त्राणां पावित्र्य सम्बन्ध च तथाचरणकथनात् "तीर्थे शास्त्रे गुरौ यज्ञे पुण्यक्षेत्रावतारयोः" इत्यने० । २ त्रिधा-प्रभासं=तीर्थं गतं=प्राप्तं त्रिभागेन प्रभा=अलका तया संगतं=मैत्री यस्यः प्रभा=तेजः तेन संगतं=सहितम् । ३ दृशं =दृष्टिं सम्यक्त्वं वा । ४ गवि=स्वर्गे देवैः प्रशंसितां पर्याकृतां पक्षे गोर्भी=भाले कृतां=स्थापिताम् । ५ विशिष्टद्रुमाः प्रवालरत्नं वा । ६ दैवे=जिने नतः, क्रीडातो वा सभावनः=सभाया अवनः=रक्षकः, भावनया सहितश्च, भावनैः=भवनपतिभिः सहितो वा ।

कृतेऽमुना के न तपः प्रपेदिरे ? ।
प्रपन्नमासन्नवने सभावने-
ष्वनेर्नृपान्नामयता यतात्मना ॥२७॥
पिनाकिवन्नाकिविनायकार्चित-
स्तपोवने तप्यति योगिनां गणः ।
भुवं यदेकाह्निकनिष्ठया स्पृश-
न्नुपादिशन्नूर्ध्वदिशः प्रवेशनम् ॥२८॥
तदीर्ष्ययेवोदयमत्र धार्मिकं
विमृश्य मन्ये बहुमन्युना ज्वलन् ।
फलेन हीनां स्वत एव पित्सया
दधावधर्मोऽपि कृशस्तपस्विनाम् ॥२९॥
यदस्य यात्रासु बलोद्धतं रजः
प्रजाव्रजं ध्वान्तभियं भविष्यति ।
इतीव वेधा विदधे मणीमया-
ञ्जनालयांस्तत्र नृपस्य पश्यतः ॥३०॥

---

१ प्रपा=जलदानस्थानं तैः इन्दिरा=लक्ष्मीर्यत्र। २ "तपस्विनी पुनर्मांसी कटुरोहिणिकापि च" इत्यनेकार्थः, "तपस्वी तापसे दीने" इत्यपि। ३ अस्य=लोकस्य, योगिगणस्य राज्ञो वा। ४ "यात्रोत्सवे गतौ वृत्तौ" इत्यनेकार्थः।

पुरोऽप्यमुष्या नृपतेः प्रयाणजं
स्फुरत्प्रतापानलधूममञ्जिम ।
रजश्चलद्वाजिखुराहतं द्विषां
पुरस्तदाख्यातुमिव स्थितं मुखे ॥३१॥
पुरोऽर्थिभिश्चार्थिजनाय दित्सुभि-
रदापि नीरं क्रमवृद्धवीचिभिः ।
तदेव गत्वा पतितं सुधाम्बुधौ
विधौ ग्रहानन्तरशौचकर्मणे ॥३२॥
यशः स्वरूपाददमीयनागर-
प्रदानजन्यं कृतविभ्रमं दिवि ।
जगद्भ्रमात् तत्क्रमचारजं रजो
दधाति पङ्कीभवदङ्कतां विधौ ॥३३॥
स्फुरद्धनुर्निस्वनतद्धनाशुग-
प्रवर्षणैर्भूमिपतेर्यशस्तरुः ।
सपल्लवश्चित्रमिदं न किन्तु तद्

१ अर्थिभिः=धनिभिः। २ "हरेः पदांदेवधुनीयनेऽधुना" इति वा पाठान्तरम्।

रिपुस्तदा[1]पल्लवलक्ष्मवानभूत् ॥३४॥
अहर्निशं दातुरनन्तरोदक-
प्रगल्भवृष्टिव्ययितस्य सङ्गरे[2] ।
नृणां मनस्तापविभावमारभूत्
स धूमभूमी कृपणानने स्थिरः ॥३५॥
अदःपुरः क्ष्मापबहुप्रतापजै-
र्दिवाकरः प्रादुरभूत कराकरैः ।
निजस्य तेजःशिखिनः[3] परःशताः
परे रुचिभ्रंशमिहाभिलेभिरे ॥३६॥
क्षिपन्मनःकाननदाहमाहमी
प्रतापवह्निः प्रससार भूपतेः ।
नदीर्ष्ययेवात्र विशिष्य भूतले
वितेनुरङ्गारमिवाऽयशः परे ॥३७॥
अनल्पदग्धारिपुरानलोज्ज्वलैः
प्रतापरोचिर्निचयैर्भुवः पतिः ।

१ आपदां लवाः=लेशाः तेषां लक्ष्म । २ "सङ्गरोऽङ्गीकृते युद्धे क्रियाकारे विपापदोः । सङ्गरं तु फले शम्याः" इत्यने० ।
३ शिखिनः=वह्नयः ।

रराज राजन्यसमाजमध्यगः
स विश्वसेनः स्वरमेन तत्पुरे ॥३८॥
द्विधा क्षमापस्य[1] चिरस्य तापनो
निजप्रतापैर्वलयं ज्वलन्भुवः ।
स्वतः परित्यज्य गताः क्वचिद्वने
वनेचराभाः क्षितिपा[2] द्विधाऽरयः ॥३९॥
क्व विश्वसेनस्य विनश्यदापदः
पदं सुराज्यस्य सुरासुरार्चितम् ।
प्रदक्षिणीकृत्य जयाय[3]-सृष्टया
यशःश्रियाऽलम्भि यतो जगत्त्रयम् ॥४०॥
क्व कौशिकस्य प्रभुताऽसुराद्भिया
ऽनिमेषभाजोऽक्षिसहस्रसंगमे ।
अतोऽत्र राजाऽनुपमस्त्रिविष्टपे
रराज नीराजनयासराजघः[4] ॥४१॥

---

१ क्षमा=भूः, पक्षे तितिक्षा। २ क्षितिं=भुवं क्षयं च पान्ति रक्षन्ति। ३ आयः=लाभः। ४ नितरां राजनये आस्ते इति नीराजनयासः, स चासौ राजघश्च; यद्वा, निर्गतो राजनयोऽत्र तम् अस्यति=क्षिपति स तथा।

निवारितास्तेन महीतलेऽखिले-
ऽप्यनीतयो नीतिकरेण भूभुजा ।
कुतो भवेत्तद्विपथेऽप्यदृष्टव-
द्भयं नु दृष्टं परिशिष्टमप्यतः ॥४२॥
द्विधा क्षमायाः प्रतिपालिना जने
निरीतिभावं गमितेऽतिवृष्टयः ।
जहुर्न ताः स्विन्नवपुर्जलच्छलाद्
भयद्रुतद्विडनृपसंगमं श्रमात् ॥४३॥
विनाशनं नाशनमेव केवलं
कुशासनं वा न पुनः कुशासनम् ।
न तत्यजुर्नूनमनन्यविभ्रमा
अमी श्रमास्तस्य नृपस्य विद्विषः ॥४४॥
हृदि भ्रमा नो भुवि विभ्रमाः श्रवः-
पुटेऽपटुत्वे न तथा-ध्वनि-ग्रहाः ।
बभूवुरन्यास्तिमिरेण मानवाः

१ दृष्टं स्व-परचक्रजं भयं कुतस्तस्य देशे भवेत ? अदृष्टं वह्नि-तोयादेर्भयम । २ कुः=भूमिः । ३ ध्वनिग्रहाः=शब्दग्रहणानि कर्णापटुत्वे न स्युः, पक्षे अध्वनि=मार्गे निग्रहाः=बन्धा जाताः ।

प्रतीपभूपालमृगीदृशां दृशः ॥४५॥
सितांशुवर्णैर्वयति स्म तद्गुणै-
र्यशोऽम्बरं त्वम्बरभागवाममे ।
तदीयजाड्यक्षतये महीशितुः
प्रतापवह्निं विधिना विधिर्व्यधात् ॥४६॥
नृपेण देशे धृतमृत्रमंत्रये-
महामिवम्नः महक्कुतरी बहुम् ।
स्वदोस्तुरीयं चपला मितांशुक-
प्रभाविशेषं जनयांबभूव तम् ॥४७॥
विपक्षपक्षस्य पतद्भिरंशुकैः
पलायितो केवलगात्रपालनात् ।
दिशां गणस्याऽऽवरणं रणाङ्गणे
बभूव भूवल्लभरागशालिनः ॥४८॥
शशाक कर्तुं नृपकेतुवायुभि-
स्त्रुटद्भिरेवाहितमूत्रजालकैः ।
इतस्ततो नो चरणाद् रणान्तराद्

१ चपला इयं तुरी, यद्वा तुरीयं=चतुर्थं युगम् । २ पलायि-तिः=नाशस्तत्र । ३ वनपर्वतादि दुर्गं यावत्पश्यतः ।

यशःपटं तद्भटचातुरी तुरी ॥४९॥
प्रतीपभूपैरिव किं ततो भिया
विरुद्धताऽन्यैर्विषयैर्न्यषेध्यत ।
तदर्तवोऽन्योन्यगुणानुगुण्यतः
सुखाय भूभृद्विषये बभूविरे ॥५०॥
मिथः सुरैरप्यसुरैर्भयातुरै-
र्विरुद्धधर्मैरपि भर्तुरुज्झिता ।
मणीगणच्छायमिहातपेऽप्यदो
विरोचते चैकपदं दिवि ध्रुवः ॥५१॥
बलानुरक्तोऽप्यबलानुरागवान्
कृतानुकम्पोऽननुकम्पशासनः ।
अमित्रजिन्मित्रजिदोजसा स य-
ल्लसत्प्रभावोऽप्यलसत्प्रभाववान् ॥५२॥
क्षितीश्वरोऽप्यक्षितिभृद्धने जने-

१ यशःपटं कर्तुं नो शशाक इति समन्वयः। २ विषयैः=शब्दरूपरसादिकैः। ३ तदा ऋतवः। ४ अलस इव आचरन्ती अलसन्ती क्विप् शतरि ईदृशी स्थिरा प्रभा कान्तिस्तस्या अवनं रक्षणं अवः तद्वान्. यद्वा 'ऽनलसत्प्रभाववान्' इति पाठे अनलः=अग्निः। ५ धने तथा जने न क्षयभृत्=धने जने पूर्ण इत्यर्थः।

ऽज्ञनेन मुक्तोऽपि जनेन मोहितः ।
अमुक्तशृङ्गोऽपि स मुक्तधीरधी-
र्विचाऽरुक चाग्दृगप्यवर्तत ॥५३॥
तदोजसस्तच्चशमः स्थिताविमौ
जगत्कृताऽऽगृह्य नियोजितौ हरी ।
सुरासुरेशौ तदमारभावतः
समीरनुन्नौ दिवि वा गतौ भुवि ॥५४॥
विधिः परं भूमिभृतः कृता मया
वृथेति चित्ते कुरुते यदा तदा ।
तदीयमाराश्रितविश्वमेनया
नयेन नित्यं व्रियते स भूपतिः ॥५५॥
यदाऽरुणस्तापयतेऽतिदारुण-
स्तलं भुवस्तत्र विधिः स्मृतावधिः ।
तनोति भानोः परिवेषकैतवाद्
निबन्धनं तन्महसाऽंहमाऽवशी ॥५६॥
भृशं यशःस्पर्धितया तथाऽऽस्यया

---

१ मुक्तं द्विधा पाणियन्त्राभ्याम् । २ तस्य राज्ञस्तेजसा ।

प्यधिक्रुधाऽऽकृष्टभरूपरूप्यकः ।
रुरुत्सुरुच्छृङ्खलया करोत्ययं
तदा विधिः कुण्डलनं विधोरपि ॥५७॥
अयं दरिद्रो भवितेति वैधसीं
क्रियां परामृश्य विशिष्य जापतः ।
विधेः प्रमत्त्या स्ववदान्यताकृते
नृपः सदाऽर्थी भवितेत्यलीलिखत् ॥५८॥
करात् करेऽर्थं निदधन्नृपोऽर्थिता-
लिपिं ललाटेऽर्थिजनस्य जाग्रतीम् ।
वदेत् सुधीर्योऽप्यवधार्य तन्मतिं
दृढीचकार स्वमतं स्वतन्त्रधीः ॥५९॥
अलीकवृत्तेस्तदलीकवृत्तितां
नृपोऽर्थिनामक्षरमंततस्ततः ।
मृषा न चक्रेऽल्पितकल्पपादपः

---

१ आकृष्टा भरूपा=नक्षत्ररूपा रूप्यका येन । २ अर्थितारूपा या लिपिस्तां ललाटे जाग्रतीं यः सुधीः कथयेत् तस्य मतिमवगणय्य: कश्चिद् वक्ति—'वैधसी लिपिर्ललाटे'। तदशुद्धम्, करेण करे द्रव्यं दीयते, कर एव विधिलेख इति भावः ।

स [1]धातुधार्यार्थविपर्ययादिव ॥६०॥
भवेन्न [2]संसारपदं ममाश्रये
कदापि संसारवतां विदूरतः ।
कृतः क्षितीशेन धनैर्वनीपकः
प्रणीय दारिद्र्यदरिद्रतां [3]नलः ॥६१॥
विभज्य मेरुर्न यदर्थिसात्कृतो
मया स्याद् दिग्विजयान्तरायकृत् ।
इतीव विज्ञप्य विधौ महोदधौ
निमज्जयामास [4]गिरिर्गिरिं दिवः ॥६२॥
कलङ्कितः प्रागपि सेतुकेतुना
न सिन्धुरुत्सर्गजलव्ययैर्मरुः ।

१ 'अर्थणि याच्ञायां' अत्र याच्ञार्थः, पक्षे अर्थः=द्रव्यं, धातुधार्योऽर्थः याच्ञा, तद्विपर्ययं अयाचकः। धातुना रूप्यकादिना धार्यं करणीयः अर्थस्य याच्ञारूपस्य विपर्ययः, व्यापारेऽर्थविपर्ययः। यद्वा 'अयं दरिद्रो भविता' इत्यत्र 'न भविता' इति विपर्ययः, भूधातोस्तृचि नञ्तत्पुरुषः। २ शं=सुखं सारस्य=धनस्य पदं स्थानं दूरं न भवेत्। ३ यद्वा नल इव नलः, लुप्तोपमा, नलराजस्य पूर्वं भावात्। ४ गिरिः=नृपः "गिरिः पूज्येऽक्षिरुजि कन्दुके शैले गिरीयके गीर्णावपि" इत्यनेकार्थः।

कृतो निवासाय महीस्पृशामतो
व्यशोषयत् तं वडवाग्निना नृपः ॥६३॥
न चौर्यचर्यापहृताभिधानतः
पुराणवृत्ता न दरिद्रमुद्रणा ।
अमानि तत्तेन निजायशोयुगं
भ्रुवोर्द्वयस्य व्यपदेशलेशतः ॥६४॥
यशःप्रतापानुगपुष्पदन्तयो-
र्मयार्जितेनापहृतं न दुस्तमः¹ ।
तदेव मेने नृपतिः स्वदुर्यशो
द्विकालबद्धाश्रिकुराः शिरःस्थितम् ॥६५॥
अजस्रमभ्यासमुपेयुषा समं
कलत्ररत्नेन मुदाऽतिचारुहृदया ।
यथेच्छयाऽसौ विषयोपभोगत-
श्चिराय राज्यं विदधे भुजौजसा ॥६६॥
नियोगिनी न्यस्य धुरं भुवः प्रभु-
र्मुदैव देवः कविना बुधेन च ।

---

१ दुस्तमः=राहुरूपम् ।

यथागमं भावनया नयानयं
पुपोष सर्वत्र पवित्रचेतसा ॥६७॥
निरन्तरं स्निग्धतरान्तरात्मना
तया रमण्याऽनुभवन् सुखं रतेः ।
दधौ पटीयान् समयं नयन्नयं
रसेन केलिं कलहंसवद् मधौ ॥६८॥
ददद् धनं स्वेष्टमयं महाशयः
स्वयं कलाकेलिरसालयीभवन् ।
श्रिया चकारापरपद्मया समं
दिनेश्वरश्रीरुदयं दिने दिने ॥६९॥
अधोविधानात् कमलप्रवालयोः
फणागणैः स्वैर्मृदुलैर्भुवं वहन् ।
[2]अहस्यतेलापतिना सुभोगिना-
[4]मशेषशेषः खलुः सेष शेषराड् ॥७०॥
प्रसादमापाद्य सुवर्णवाससां

---

१ जयान् । २ कोमलफणाभिर्भूभारवहनादयं भोगीन्द्रो न, किन्तु सकलभोगिनां शेषः अनुचर इत्ययं राज्ञा अहस्यत । ३ पृथ्वीपतिना । ४ अशेषस्य समग्रस्य शेषः ।

शिरस्तु दानादखिलक्षमाभुजाम् ।
नतैः पुनस्तैर्वसुधां प्रसाधयन्
स्वयं स रेमे विषयेषु तन्मयः ॥७१॥

सतीषु सत्यार्थयशस्वती स्वतः
शचीव रूपादधिरा गुणाङ्गणम् ।
पुरंदमूर्ध्वं भवितेति वेधसा
कलत्ररत्नं विदधेऽस्य तुष्टये ॥७२॥

सतीषु रत्नं तदशेषलक्षणै-
र्विचक्षणैः संस्तुतमस्ति यत्पदोः ।
पुरा मणीवेश्म सुरीशिरोऽस्त्वतः
पदं किमस्याङ्कितमूर्ध्वरेखया ॥७३॥

जगज्जयन्तेन च कोशमक्षयं
समं दधानेन बिडौजसा समा ।
अलम्भि शोभा भुवि भूभुजा सुते-

---

१ यत्पदोः पदं=स्थानं मणीवेश्म, 'चकार' अध्याहारात् । सुरीणां शिरः अस्तु, अत एवास्य पदमस्याङ्कितं शोभा भूषा ऊर्ध्व-रेखया 'अस्ति' इति शेषः । अङ्कनम्=अङ्कितम् पदार्थम । २ जगद्=विश्वं तथा कोशम् अक्षयं दधानेन । कथं, जयन्तेन पुत्रेण समम् । ३ तुल्या ।

ऽमितेऽवतीर्णेऽश्वादिने नभस्यजे ॥७४॥

जगज्जयं तेन च कोशमक्षयं

प्रणेष्यता स्वप्रगामिन्धुरादिना ।

मणीगणान्तेन सुरोऽत्र सूचितो-

ऽचिराच्चिराकुक्षिमपि प्रपन्नवान् ॥

( पाठान्तरम् )

त्रयोदशाऽहेऽप्यमिऽथ शुक्रजे

प्रणीतवान् शैशवशेषत्रानयम् ।

स लब्धजन्मा सकले कुलेऽतुले-

ऽप्यरिष्टशान्तिं भुवि शान्तिसंज्ञया ॥७५॥

कृताभिषेकोऽपि सुरैः सुराचले

प्रणीतवान् शैशवशेषत्रानयम् ।

भुजे भुवो भारमहस्य भूभुजः ।

क्रमेण विश्रामसुखे गतश्रमः ॥

( पाठान्तरम् )

१ भाद्रपदासितसप्तम्याम् अवतीर्णः । २ ज्येष्ठासितत्रयोदश्यां जातः । ३ अरिष्टशान्तिं प्रणीतवान् । ४ उपयुक्तेनरं शैशवं शैशवशेषः=अतिबाल्यवान् " शेषः सीरिण्युपयुक्तेतरेऽपि च " इत्यनेकार्थः । काव्यान्तरे शैशवशेषम्=अव्यक्तयौवनम् ।

प्रपद्य विद्या अनधीतवानपि
दधत् कुलीनाः सकलाः कलाः प्रभुः ।
सखा रतीशस्य ऋतुर्यथा वनं
विवेश पित्रोर्हृदयाब्जमात्मजः ॥७६॥

विभोः स्वभावेन विभाविभावसौ
प्रसृत्वरे दुस्तमसौ विजित्वरे ।
विपक्षपक्षस्त्वरया ययौ वनं
वपुस्तथाऽऽलिङ्ग्य दृशास्य यौवनम् ॥७७॥

अधारि पद्मेषु तदङ्घ्रिणा घृणा
[1] ततः श्रियाः स्थानपरिश्रमोऽप्यतः ।
[2] स्वयं तदीयाश्रयमेत्य बिभ्रता
न्यवारि वारिस्थितिजाड्यमप्यदः ॥७८॥

[3] श्रिया करग्राहविधेरिवाश्रयन्

१ अतः कारणात्, श्रियाः स्थानेन यः परिश्रमः खेदः, न्यवारि=निषिद्धः । २ स्वयं स्वस्मिन्, वारिस्थितिजाड्यं=वारिमध्ये स्थित्या जडत्वं वा=अथवा वारिमध्ये स्थितावपि जडत्वं स्यात्, अपि अदः न्यवारि, भगवच्चरणे वारिस्थितिजाड्यं नाभूत् । ३ श्रिया=लक्ष्म्या सह करग्राहविधेरिव, श्रीरपि करं गृह्णानाः करेण राजभागधेयेन गृह्णाना वा ।

क्व तेच्छयच्छायलवोऽपि पल्लवे ? ।
वनेचरे राजवधूजनो यतो
ह्यसूर्यदर्शी न पदं परं भजेत् ॥७९॥
करेऽनुरागादिव नेतुरेतु किं
जडेऽस्थिरा श्रीः खलु पद्मसंगमम् ।
तदास्यदास्येऽपि गतोऽधिकारितां
न तज्जनालीकभृदब्ज एव सः ॥८०॥
महीयमानो विधिनाऽऽधिना कृतः
प्रभोर्मुखाम्भोरुहमाम्यधित्सया ।
शरत्प्रयत्नेऽपि तदाकृतौ प्रभु-
र्न शारदः पार्वणशर्वरीश्वरः ॥८१॥

१ तस्य=भगवतः शयस्य=करस्य च्छायाः, छायाबाहुल्ये क्लीवत्वमेकवचनं च, शयच्छायं तस्य लवः पल्लवे क्व आश्रयेत्, यतः पल्लवं वनेचरं राजकरगृहीतस्त्रियाः पदं स्थानं न स्यादिति भावः । २ तस्य=प्रभोः । ३ तत्रैव पङ्के जातं यस्मालीकं विसप्रसूनं पुष्पाणीदृशः स=प्रसिद्धः अब्जः=पद्मः, यः तेषु तेषु जनेषु अलीकम्=असत्यं पुष्णाति स कथमधिकारी स्यात् ? नैवेत्यर्थः । ४ शरद्=वर्षं यावत् प्रयत्नेन कृतः महता आधिना तथापि तदाकृतौ न प्रभुः=समर्थः ।

किमस्य लोम्नां कपटेन कोटिभि-

र्द्विधापि [1]गौणे गणनां व्यधाद् विधिः ।

[2]परे त्वसंख्येयदशैव तज्जिने

भवे[3]दसंख्येयदशा स्वभावतः ॥८२॥

नभस्तले किं फलके खगार्चिषां

विधिर्न लेखाभिरजीगणद् गुणान् ।

[4]गुणंतराभावपरा विरेजिरे

ग्रहच्छलाद् बिन्दव एव केवलम् ॥८३॥

जिनस्य न स्विन्नवपुर्न खिन्नता

परेष्विति प्रत्ययनाय निर्मलाः ।

न रोमकूपौघमिषाज्जगत्कृता

[5]जलार्द्रितास्तेऽवयवाः कृतास्ततः ॥८४॥

मुखेऽस्य [6]नालीकविभा प्रतिष्ठिता-

---

१ गौणे=गुणभरे अप्रधाने सामान्ये बहिष्ठे । २ परे मुख्ये गुणभरे संख्या न । ३ स्वभावतः जिने संख्यं=युद्धं तद्योग्या दशा न । ४ गुणंतरः=दोषः । ५ जलेन आर्द्रिता न कृताः, स्वेदे सति मलाश्रयात् । ६ नालीकं=कमलं, पक्षे सत्यभा, नञ्सदृशन-कारेण समासः ।

  ञेयद्वये वा चरणद्वयेऽपि च ।
भ्रुवेण लोम्नामिव मूलकेनवात्
  कृताश्च किं दूषणशून्यबिन्दवः ॥८५॥
अमुष्य दोर्भ्यामरिदुर्गलुण्टनं
  चमूचरैर्नोपशमाः समाश्रिताः ।
प्रभावभारग्रहणं यशोग्रहे
  सुवर्णचन्द्रद्युतिभासुरे पुरे ॥८६॥
भुजद्वयी भागवती बभौ यया
  ध्रुवं गृहीतार्गलदीर्घपीनता ।
न्यषेधि तस्मिन् विषये भयागमः
  प्रजासु दुर्नीतिगृहे समागमः ॥८७॥
पुरं रिपूणां च कुरङ्गसंगतं
  कृतं भटैर्भागवतैस्त्रमज्जनम् ।
उरःश्रियां तत्र च गोपुरस्फुर-

---

१ पक्षे आशयद्वये=निश्चयव्यवहाररूपे, चरणद्वये=अणुमहाव्रतरूपे । २ प्रभावः=तेजोऽस्य ग्रहणे, यद्वा, प्रभौ=रिपौ, अभं=अदीप्ति यत् भारं=अरिसमूहस्तद्ग्रहणे ।

स्कपाटताधायि विभोरसंगतम् ॥८८॥
प्रजासु वात्सल्यधरेऽपि शल्यवद्
द्विषां सपत्राकृतिकारके जिने ।
प्रतापवह्निस्तदुरःस्थितोऽदहत्
कपाटदुर्धर्षतिरःप्रसारिता ॥८९॥
स्वकेलिलेशस्मितनिन्दितेन्दुनः
पुनर्नु चन्द्रेण सुखस्य सौहृदम् ।
समिद्धतारारुचिहेतुनाऽर्हत-
स्ततः स भालेऽर्धवपुः शशी स्थितः ॥९०॥
विधौ श्रियाऽर्हद्वदनस्य मित्त्रतां
निजांशदत्तर्जितपद्मसंपदः ।
विचार्य तद्योगबलात् कुशेशयं
तदालिमालाजटिलं वने स्थिरम् ॥९१॥
निशीन्दुरर्हद्वदनेऽस्तिसौहृद-
स्तथा दिवाब्जं न सदा समंगतम् ।

---

१ असंगतं=रिपुत्वं यथा स्यात्तथा । २ 'कृतः स्वभालेन समोऽर्धनः शशी' इति वा पाठः । ३ 'अस्ति' इत्यव्ययं सद्भावे । ४ संगतं=सौहृदं=मित्त्रता ।

अतद्वयीजित्वरसुन्दरान्तरे
न साम्यधीः क्वापि सतां ततः परे ॥९२॥
न चार्हतोऽनुत्तरवासिनः सुरा
विधातुमङ्गुष्ठमपि क्षमाः क्रमात् ।
असंशयस्तेन मनःशयोऽस्ति मे
न तन्मुखस्य प्रतिमा चराचरे ॥९३॥
सरोरुहं तस्य दृशैव तर्जितं
जले निमज्जद् बहुलज्जया जयात् ।
ततः स्फुरत्पद्मपदं तदञ्चितं
वृतं न जैनाननमैश्वर्यश्रिया ॥९४॥
जडस्वरूपा जडजातजन्मना
जिताः स्मितेनैव त्रिधोऽपि श्रियः ।
निजाननेन श्रुतिशालिनाऽमुना
मनाग् न साम्यं द्विजराजि राजते ॥९५॥
मुखे सुधांशौ च वरे सरोरुहे
कलातुला स्याद् द्विजराजयोगतः ।

---

१ प्रशस्तम् । २ 'जडजातजन्मना' इति करणतृतीया । ३ द्विजराजाः=दन्ताः, पक्षे सुधांशुर्द्विजराज एव, तृतीयपक्षे द्विज-राजः कलहंसः ।

अतः परं भव्यमहो महीयसी
सुवृत्तबोधोदयपल्लवप्रभा ॥९६॥
दिवा विबोधाद् यदिवाऽनिशोदयात्
त्रयेऽप्ययं स्याद् व्यतिरेकताश्रयः ।
ततोऽन्वयाद्वा व्यतिरेकतः स्वत-
स्तदाननस्योपमितौ दरिद्रता ॥९७॥
अयुक्तमुक्तं यदिवा तुगातुरा-
शयाऽऽशया पूर्वविपश्चितामतः ।
समुद्रमारस्य धियाऽत्र येन सा
तदाननस्योपमितौ दरिद्रता ॥

(पाठान्तरम्)

---

१ सुष्ठु वृत्तबोधानां=चरणज्ञानानां उदयो येभ्य ईदृशाः पल्लवाः=पदलेशास्तेषां प्रभा=शुद्धिः, सुष्ठु वृत्तः=वर्तुलः, बोधः=प्रकाशस्तेन उदयं पल्लवयन् प्रभा चन्द्रपक्षे, एवं सरोरुहेऽपि पल्लवानां प्रभा । २ मुखपक्षे अनिशम् उदयः अनिशोदयः तस्मात् । ३ भेदकारणम् । ४ तुगा=संभ्रमस्तेन आतुरो य आशयस्तदाशा=अभिलाषस्तया । ५ मुदो रसस्तस्य आरः=प्राप्तिस्तेन सहितस्य १ समुद्रमारं धनं पुष्टत्वात् २ मुद्रा=संकोचस्तस्य आरः=गमनं यस्मात् तेन युतस्य ३ ।

दृशः प्रकाशात् सरसस्वभावतः
प्रपन्नसत्सौरभतस्त्रयी सदृक् ।
ततो न काचिद् विदुषां प्रभाजुषां
तदाननस्योपमितौ दरिद्रता ॥

(पुनः पाठान्तरम्)

स्वबालभारस्य तदुत्तमाङ्गजै-
र्विधित्सतः साम्यमसम्यगाशयात् ।
पराङ्मुखत्वाद् धवलीभवन्मुख-
क्रियां चमर्यादिशति त्रपावशात् ॥१८॥
स्वबालभारस्य तदुत्तमाङ्गजैः

---

१ दृशः प्रकाशादिविशेषणत्रयेण मुखं चन्द्रः पद्मं च तुल्यम्; मुखे दृष्टे दृशः=सम्यक्त्वस्य १ चन्द्रे दृष्टे दृशः=नेत्रस्य २ कमले नेत्रस्य स्वरूपप्रकटनात् ३। मुखे नवरसव्याख्यानतः, चन्द्रे स्वज-स्वभावात्, पद्मे सरसः=तडागस्य। २ "कमले मुखे च सौरभं सौगन्ध्यं स्पष्टम्। चन्द्रपक्षेऽमावास्यां सूर्यस्य कान्तिश्चन्द्रेण प्रपन्ना, इति सूरस्य इयं सौरी, सा चासौ भा च सौरभा, प्रपन्ना सती सौरभा येन तद्भावस्तथा। ३ राजा स्वशिशुवर्गस्य तथा पौरलोकस्य उत्तमा ये पुत्राः तैः समं रमणे क्रोधवारणं चक्रे नागराणां पक्षं पुष्यन्, न तु स्वशिशुपक्षं चक्रे। नागराणां पक्षे इति नागरतः "व्याश्रये तसुः" (सि० हे० ७। २। ८१) इति सूत्रेण, "देवा अर्जुनतोऽभवन्" इतिवत्। बुध्यत इति बुध्= ज्ञानं बुद्धिर्वा, न विद्यते बुध् यत्र तस्मात्, कोपविशेषणम्; बालवर्गस्य वा।

समं परिक्रीडयतोर्बुधः क्रुधः ।
प्रशान्तिकृन्नागरतः स्वसाक्षिकं
दधौ स राज्यं रुचिरं चिरं नयैः ॥९९॥
उपादिशन्नीतिभरं स्फुटं भटैः
समं चमर्येव तुलाभिलाषिणः ।
नृपे प्रशान्ते पितरि स्वयं जिन-
श्चकार राज्यं कतिचित्समाः क्रमात् ॥१००॥
अथाप्रयत्नोदितचक्ररत्नभृ-
न्नृपाधिरोहेऽत्र हयश्चलन्निति ।
अनागसं शंसति बालचापलं
परं पराकृत्य दिशां जयी भव ॥१०१॥
श्रियोऽचला नाम चलाचला इमा
भ्रमान्न ताः स्थैर्यभृतः कचिन्मताः ।
इतीव वाहः किमिवाह भूभृतं
पुनः पुनः पुच्छविलोलनच्छलात् ॥१०२॥

१ भटैः समं तुलाभिलाषिणो वैश्यस्य स्फुटं नीतिभरमुपादिशत् । २ चमराः सन्त्यस्य चमरी नृपः । ३ नीतिप्रवर्तनाय ।

महीभृतस्तस्य च मन्मथश्रिया
विभूषितस्य स्वपुराद् विनिर्गमे ।
मृगेक्षणानां स्वगवाक्षपक्षतः
कटाक्षलक्षाः प्रकटीबभूविरे ॥१०३॥
दृशाऽनिमेषेण[1] पदास्पृशा[2] पदा
निजस्य चित्तस्य च तं प्रतीच्छया ।
विलासिनीनां हृदये रतिः स्वतः
स्फुटीबभूवाद्भुतरूपसंपदा ॥१०४॥
पुरस्मरागा इव तत्पुरस्मरा
रमाः[3] समा दिग्वलयात् समागमन् ।
द्विधा नृपे तत्र जगत्त्रयीभुवां
मनोरमाङ्गे विषमायुधाश्रये[4] ॥११५॥
अनङ्गभावादनिमेषदर्शना-[5]

१ अनिमेषेण=निमेषाभावेन । २ पदं स्थानं न स्पृशन्ति पदास्पृक् तेन, पदा=पादेन । ३ जगत्त्रयजातार्थानां रमाः=श्रियः । ४ विषमायुधाः, स्मरोऽपि । ५ अनङ्गवदलिप्तभावादनङ्गं व्योम सिद्धो वा " अनङ्गं खे चित्तेऽनङ्गस्तु मन्मथे " इत्यनेकार्थः । अनङ्गभावे सर्वतो मुख्यभावे "अङ्गं मन्त्रिकगात्रयोः । उपसर्जनभूते स्यादभ्युपायप्रतीकयोः" इत्यनेकार्थः ।

दय कलाकेलिमयाशय भजन् ।
द्विधाऽप्यतस्तत्समये रसाश्रये
नतभ्रुवां मन्मथविभ्रमोऽभवत् ॥१०६॥
निमीलनभ्रंशजुषा दृशा भृशं
सुरीगणे पश्यति संगताङ्गना ।
पृथक् समालक्ष्यत तत्क्षणे चलैः
कटाक्षमोक्षेगनिशाणिनाञ्चलैः ॥१०७॥
अनन्यसाधारणरूपसंपदं
निपीय तं यक्षिदृशाभिरर्जितः ।
मनोऽनुरागः स फलेग्रहोऽभवत्
भुवि-स्थितिं चातुरधुर्यदीधरत् ॥१०८॥
पुरावतारादिदिने सुराङ्गना
वतेरुरद्दतारसोत्सवे नवे ।
अमूस्तमभ्यासभसं वितृष्णते-
ऽनिमेषभावेऽपि न ताः श्रमं गताः ॥१०९॥

---

१ मन्मथस्य विभ्रमो यस्माद् यस्मिन वाजनः, अयं जिनः स्त्रीणां मन्मथविभ्रमोऽभूत्। २ भुवि=पृथिव्यां चातुरधुरि=चातुर्यमुख्ये, पक्षे भुविस=स्वर्गे, आतुरधुरि=दुःखधुरि ।

वशी जिनोऽपि स्ववशीभवेदयं
चलेक्षणत्वादितिधीरिवांवशी ।
निनिन्द चित्ते स्वसुरावतारतां
निमेषनिःस्वैरधुनापि लोचनैः ॥११०॥
अदस्तदाकर्णि फलाढ्यजाऽवन
द्वयं श्रुतेः सांप्रतमीक्षितैर्दृशोः ।
वियुक्तिनस्तप्यति तत्त्वगिन्द्रियं
निनिन्दुरेवं भुजगाङ्गना निजम् ॥१११॥
पुरान्तरस्थायिमृगेक्षणास्तदा
दृशोर्द्वयं नस्तदवीक्षि चाफलम् ।
श्रुतिप्रशंसां नु शशंसुराशयात्
शयालुभावेऽपि हितालिशालिनि ॥११२॥
निशम्य देवं वनपावनोद्यतं
प्रमोदते द्वंद्वफलस्पृशा दृशा ।
इति स्म चक्षुःश्रवसां प्रियाऽनले
स्मरस्वरूपे हृदयेऽधिदीपिते ॥११३॥

१ हिताः=हितकारिका या आलयः=सख्यः ताभिः शोभमाने ।
२ दर्शन-श्रवणरूपे ।

विलोकयन्तीभिरजस्रभावना-
    पुरस्सरं सर्वपदे स्मरोपमम् ।
न विस्मरत्वं समनीयत क्वचिद्
    मनस्विनीभिर्दृढरागिचेतसा ॥११४॥
प्रसृत्वरे रेणुभरे वधूगणो
    बलाद्मुन्नेत्रनिमीलनेष्वपि ।
न्यवेशयच्चेतसि मा स्पृशन् रजो-
    ऽङ्गजोऽयमेनं निधिवत्प्रियाशयात् ॥११५॥
लभेत चेतः किल वैक्रियाक्रियां
    प्रियां वरं स्यात् ममयेऽयमाशयः ।
अलम्भि मर्त्याभिरमुष्य दर्शने
    पुनः पुनः संगमनेऽप्यसंशयः ॥११६॥
भवेद् भवस्यानुभवः सुरात्मक-
    स्तदा वरं नत्तुपवन्न मानुषम् ।
यतो महीशस्य यशस्यदर्शने

१ 'मा स्पृशन्' इति शत्रन्तम्। अयं अङ्गजः कामः एनं रजः मा स्पृशन् इति, अन्योऽप्यङ्गजः चित्तान्नोत्सार्यते मलस्पर्शशङ्कया ।

न विघ्नलेशोऽपि निमेषनिर्मितः ॥११७॥
न का निशि स्वप्नगतं ददर्श तं
वशा रमात् तदृ्ध्रुवभावनावशात् ।
न का पुनः संगमनोन्मनस्तया
प्रपञ्चसंचारक्रिया मर्वीकृता ? ॥११८॥
शिरो धुनाना मधुनाऽधुनाऽङ्गना-
ञ्जगाद गोत्रस्खलिते च का न तम् ।
उपायनं का न चकार कार्यधो-
रधीरताभृच्च पुरः सुरप्रभोः? ॥११९॥
मनोवलात् का ह्यवलापि नाभिलद्
रहःस्थिताऽहर्निशतद्वशंवदा ।
तदात्मताध्यानधवा रते च का
प्रियाऽभवद् नामनकर्मणा प्रिये ?॥१२०॥
श्रुतेऽथ दृष्टेऽपि पुराऽङ्गनां यदा
स्मरस्तनापातिशयेन निष्कृपः ।

---

१ देवाग्रे ढौकनं देवप्रसत्त्याप्ययं मिलन्ति चेद् वरमित्याशयः । २ एतद्ध्याने रतां नानासनकरणेन इष्टा भर्तुर्नाभूत् ।

तदा तदासक्तधिया च का ह्यध-
श्चकार वा न स्वमनोभवोऽङ्गवम् ? ॥१२१॥
श्रियाऽस्य योग्याऽहमिति स्वमीक्षितं
मदार्पणाद् दर्पणधारिणी करे ।
अताद‍ृशाङ्गामिद‍ृशा कृशाशया
शयालुतायामपि निद्रया जहे ॥१२२॥
स्वयं विलिप्याय च यक्षकर्दमः
करे तमालोक्य सुरूपया धृतः ।
स दुर्दमानन्यजदाहमाहमा-
दुवाह दुःखादिव हव्यवाहताम् ॥१२३॥
मनोभवन्मानवशेन मानवी-
नवीभवन्त्याऽप्यनदहनाधिया ।
विहाय नर्मामपदर्पया कथा
हताशयाऽत्राङ्गमुखताऽभ्यनाथि नो? ॥१२४॥
कृतेऽप्युपाये शतशोऽपशोकया
यदा बभूवे न कदाचिदेकया ।

१ धिक्कारं न चकार, काममुपालभत । २ हता=भग्ना आशा=मनोऽभिलाषो यस्यास्तया । ३ सांख्यमया ।

तदा गृहीतव्यतिरेकशङ्कया
ने दर्पणः श्वासमलीमसः कृतः ॥१२५॥

गच्छाधीश्वरहीरहीरविजया-
म्नाये निकाये धियां
भृत्यः श्रीविजयप्रभाख्यसुगुरोः
श्रीमत्तपाख्ये गणे ।
शिष्यः प्राज्ञमणेः कृपादिविजय-
स्याशांस्यमानाग्रणी-
श्चक्रे वाचकनाममेघविजयः
शस्यां समस्यामिमाम् ॥१२६॥

इति श्रीनैषधीयमहाकाव्यसमस्यायां महोपाध्यायश्रीमेघविजयगणि-
पूरितायां प्रथमः सर्गः संपूर्णः ॥ श्रीः ॥



१ नैषधीयचरिते प्रथमसर्गे ३१ श्लोकः । २ आशास्यमानाः=
शिष्याः ।

## ॥ अथ द्वितीयः सर्गः ॥

---

यथोह्यमानः खलु भोगभोजिना
रथेन विष्णुः प्रभविष्णुतेजसा ।
तथाऽधिराजः स रराज राजभिः
समं व्रजन् राजपथे यथेच्छया ॥१॥

दिशोऽपि तूर्यध्वनिनाऽभिगर्जयन्
प्रसह्य वेगाद्विनिर्गम्य पत्तनम् ।
ययासुग्रैस्सहवाजिराजिभि-
र्जगाम चक्रानुगमाऽध्वनाऽधिपः ॥२॥

अथाजगामाभिमुखः स्वसीमनि
नृपोऽपि भीमः किल कुण्डिनेशिता ।
विदर्भजाया मदनस्तथा मनो-
रथं प्रजायाः सह राजभिर्विदन् ॥३॥

---

१ किंभूतोऽधिराजः प्रभविष्णुतेजसा उह्यमानः, किं० भोगैः रसादिभिर्भुज्यते स्म तेन । २ मार्गेण । ३ मदयति हर्षयति मदनः ।

गजाश्वभृङ्गारणया सतोरणं
पुरं समन्तादसमं विभूषणैः ।
असौ समीक्ष्यं लघुना महाभृता-
नलावरुद्धं वयमेव वेशिनः ॥४॥
सदङ्गभृत्प्रत्यर्थितं पुरा तदा-
ऽऽदि-वृद्धिकृत-तद्धितवत्-सुसंगतम् ।
पदं स्वर्गापलघुनाऽप्यसौ महा-
नलावरुद्धं वयमेव वेशिनः ॥

(पाठान्तरम्)

नृपेऽनुरूपे निजरूपसंपदां
जिनं प्रयाणाभिमुखे दिशां जये ।

१ धारावन्त्रे नलःर्यासं, महान्नवे नदीधिकारान्ः नरावरुद्धं वा "नरः कृष्णोऽर्जुनेऽपि वा" इति कोशः । रुक्मिण्यावरणे कृष्णेन रुद्धम । २ पक्षे अङ्गसंज्ञाकारिप्रत्यये जातोऽस्मिन्निति प्रत्यर्थितम । तदादि=तद्धितादारभ्य वृद्धिकृत्, तद्धितपक्षे आदिवृद्धिकृत । ३ तद्धितवन्तो मित्रजनास्तैः सुसंगतं=मिलितम । ४ पदं=स्थानम । ५ लघुना वयसा, पक्षे लघुना प्रत्ययेनाणादिना । ६ महान् यः नलः=पर्वतादिना विषमस्थानं तेन वेष्टितं, ईदृशं न इत्यपि, 'नलो राज्ञि कपौ नडे पितृदेवे नलं तु स्यात् पद्मे' इत्यनेकार्थः । लावः=छेदः, रुद्ध=रोधस्ताभ्यां वर्जितं लोपप्रत्ययबाधरहितं वा । कलावर्गेन व्याप्तं पदम् । ७ पक्षे युवापत्यप्रत्ययेन ।

पुरस्सरीभूय पुरन्दरः स्वयं
जयं चकारास्य परे[1] पराजयम् ॥५॥
नरेशवर्गः स्वयमेव ढौकनं
दिदेश तस्मिन् बहुशः श्रुतिं गते ।
स्वविक्रमादद्भुतचक्रचङ्क्रमात्
पुरः पुरोऽभ्यंयुषि तत्पदे पदे ॥६॥
अनेकशः क्ष्मापकनीरनीकिनी-
पतिः परप्रीतिमतीरुदूढवान् ।
विशिष्य सा भीमनरेन्द्रनन्दिनी
प्रियाऽस्य जज्ञे रतिवद् मनोभुवः ॥७॥
सहस्रनेत्रस्य शचीव सोन्नत-
स्तनी हिमांशोरिव रोहिणी प्रिया ।
तथा दधे[2] पञ्चमचक्रिणोऽर्हतो-
ऽमनोभवाज्ञाङ्कवशंवदं[3] मनः ॥८॥
उपासनामस्य[4] पितुः स्म रज्यते

१ परं=शत्रौ । २ दधे=पुपोष, धारयति स्म वा । ३ तीर्थंक-रूपं अमनोभवं=अकामम्=अकषायम्, आज्ञा=ज्ञानं तस्यांकम् अच्छिन्नीयं वशंवदं=स्थिरं, ततो विशेषणसमासः । ४ विष्वसेनाद् देवान् क्रमागतामुपासनां परंशितुः पत्न्य रज्यते स्म ।

क्रमागतामष्टमकृत परेशितुः ।
स मागधं देवमनुस्मरन् वशी
वशीचकाराखिलपूर्वमण्डलम् ॥९॥
प्रभासमेत्याप्यमुना व्यधीयत
दिने दिने सा[1]ऽत्र मं[2]षु बन्दिनाम् ।
मुखाद् निशान्ते वरदामधाम्नि तै-[3]
र्दिशोरवश्यं खलु वश्यकर्मणे[4] ॥१०॥
तटं दधानो निकटं स सैन्धवं
धवः क्षितेः साधनया धनार्जनः ।
पठत्सु तेषु प्रतिभूपतीनलं
जिगाय देशेषु पुरस्सरेष्वतः ॥११॥
उपत्यकास्थायिनृपालिरुद्धता
कृ[5]ताधिसेनाऽनिरणा प्रणाशभाक् ।
वने गतापीशहयागमं भयाद्
विनिद्ररोमाऽजनि शृण्वती न[6]लम् ॥१२॥

---

१ सा=उपासना । २ श्रुते ३ तयोर्द्वयोर्दिशोर्दक्षिणापश्चिमयोः ४ वश्यकार्याय । ५ कृतः सेनाभ्याम् अधि रणः=संग्रामो यया सा । ६ वने नलं तृणविशेषं, गिरेर्नलं नालं वा गता=आश्रितेत्यर्थः ।

कथाप्रसङ्गेषु मिथः सखीमुखा-
  त्त्विकीर्षुरस्यैव पुनः प्रसन्नताम् ।
नता सतापा जनतापि नीवृता-
  मुपायनस्थापनया स्थिता स्थले ॥१३॥

धने जने वा कृतराघने भटै-
  स्तृणेऽपि तन्व्या नलनामनि श्रुते ।
घनेऽपि च स्थातुमधीरया रयात्
  तया तदादेशदशाऽप्यधीयत ॥१४॥

पराक्रमाच्चक्रभृतः परा क्रमाद्
  भटालिरामन्नतरा द्विधापि या ।
द्रुतं विधूयाऽन्यदभूयताऽनया
  नगस्थया क्वाप्युदरे दरादरैः ॥१५॥

महाहवैः क्वापि भटैः कृताहवैः
  समापतत् त्रस्यति तत्र शात्रवे ।
गिरौ स्थितं तत्प्रजया जयादृते
  मुदा तदाकर्णनमज्ञकर्णया ॥१६॥

---

१ मित्ररूपा जनता तस्या मुखात् । २ अंगदंगात्=भयात् ।
३ कृतपरस्पराह्वानः । ४ जयं विना ।

स्मरात्[1] परासो[2]रनिमिष[3]लोचनाद्

वरं त[4]मिस्राध्वनि लब्धवानयम् ।

शकादिकम्लेच्छजनैः कृताश्रयं

सुनिर्भयं साधयति स्म त[5]त्त्रयम् ॥१७॥

पथस्तमिस्रान्तरमायुषः पते !

[6]बिभेमि तद्भिन्नमुदाहरन्ति मा ।

वदन्त्यभीः स्वीमणिमण्डलत्विषा-

ऽय[7]नं समुद्[8]द्योत्य कृतेव चक्रिणा ॥१८॥

सरिद्द्वये वार्धकिनाऽद्यपद्यया

बलं समुत्तारयता नृपाज्ञया ।

जनेन यूनः स्तुवता तदास्पदं

सुखैः कृतोऽध्वा हि गतागतोद्यतान् ॥१९॥

ततोऽवतीर्याद्भुतचक्रबान्धवो

विनिर्गतोऽद्रादिव चक्रबान्धवः ।

१ स्मरात्=स्मरणात् । २ परासोः परा:=प्रकृष्टा असवः= प्राणा अर्थाद् बलं यस्य । ३ अनिमेषलोचनाद् देवात् । ४ तमिस्रायां गुहायां मार्गे । ५ खण्डत्रयम् । ६ तस्माद् मार्गादहं बिभेमि । ७ अयनं=मार्गम् । ८ प्रकाश्य ।

स्फुरद्रुचिम्लेच्छजनप्रसाधने
[1]निदर्शनं [2]नैषधमभ्यपेक्षयत ॥२०॥
[3]नलस्य पृष्टा निषधागता गुणान्
नृपेण दुर्गस्थरिपोर्विनिग्रहे ।
चरैर्निशम्याऽस्य परं शरण्यतां
प्रपेदिरेऽरण्यदशाविमोचनात् ॥२१॥
विधाय वेषान्तरमस्य विक्रमाद्
मिषेण दूतान्द्विजवन्दिचारणाः ।
यशः पठन्तः परदेशमेयरु-
र्गरुत्मतः सर्पगणा इवाग्र्यः ॥२२॥
कृताजयः केऽपि पराजयं ययु-
र्भयं प्रपद्याद्रिमयुर्निरामयम् ।
निरीय तत्कीर्तिकथामथानया-
जहुर्मुहुस्ते मुमुहुर्भयादपि ॥२३॥

---

१ नितरां दर्शनं यस्य स्मरा चरित्रपार्थमस्थमित्यर्थः । २ निषधानगरी कोशलदेशे, तस्या ईशं श्रीकृष्णनडेवचराजं नृपम् । ३ नृपेण नैषधेन निरस्तानन्तरावारः सार्थं पलायनाः सेवकाः नलस्य = सर्वता दिनल यानस्य गुणान् पृष्टाः ' कथमत्र प्रवेशनिर्गमौ स्यानाम ?' इति; तच्चरैः श्रुत्वा परं शरण्यतां प्रपेदिरे ।

भयेन भग्नेऽपि हये रथे पथे
स्थिते विचक्रेऽवनिपे निपातिते ।
रमेन मेनापतिनाऽग्निमेनया
चिराय तस्थे विमनायमानया ॥२४॥

चमूपतिर्भूपतिराजमंनिधेः
प्रमाथयन् म्लेच्छपुराणि तद्धनैः ।
घनं ललौ, तत्प्रजयाऽपमानया
चिराय तस्थे विमनायमानया ॥

(पाठान्तरम्)

प्रियं प्रियां च त्रिजगज्जयिश्रियौ
नरौ स्वरूपेण शचीपुरन्दरौ ।
ददर्श चक्री, नभसोऽवतीर्य तौ
कृताञ्जली भूमिभुजं प्रणेमतुः ॥२५॥

विनिन्यतुस्तावृषभाद्रिमीश्वरं
लिखाधिलीलागृहभित्ति कावपि ।

---

१ कावपि स्त्रीपुंसौ ईश्वरं=चक्रिणं ऋषभकूटं निन्यतुः च=पुनः, तं=चक्रिणम् इति ऊचतुः इतीति किं, हे क्षितीश ! स्वनाम अधिभित्ति लिख । २ 'कावपि' इति चक्रिणा नोपलक्षितौ शचीन्द्रौ ।

स्वनाम संसाधितभारतक्षितिः
क्षितीश ! वाचेत्युचितं तमूचतुः ॥२६॥
स विश्वसेनात्मजशान्तिचक्रिभृत्
समाजगामात्र जयेन भारते।
इति स्म सा कारुवरेण लम्भितं
जिनेशनामाभिननाम देवता ॥२७॥
कृताऽर्हदर्चाविधिनाऽधिनायकः
स्थितोऽष्टमे स्पष्टतयाऽष्टमङ्गलः।
हरेः स्म तत्राभ्युदयन्महोमहा-
ऽनलस्य च स्वस्य च सख्यमीक्षते ॥२८॥
मनोरथेन स्वपतीकृतं नलं
वनाद्रिदुर्गस्थितमारुरुत्सुकः।
समुत्सुकः पञ्चमचक्रभृत् पुनः
खगाचलेऽभ्यागमनेच्छयाऽचलत् ॥२९॥
पुरश्चलच्चारुचमूपतेश्चमू-

१ हरेः=इन्द्रस्य। २ अभ्युदयस्तेजस्मा वह्निः। ३ मनसा अस्वपतिः स्वपतिः कृतः स्वपतीकृतस्तं नल=स्थानविशेषम्; न विद्यते स्वः=आत्मा पतिर्यस्य स अस्वपतिः।

निशि क्व मा न स्वपती स्म पश्यति ।
नलस्थितारिप्रतिरोधनाद् वन-
ग्रहेऽवरोधप्रतिबन्धनक्रियाम् ॥३०॥
परैः कृता या नलदुर्गताकृति-
र्धनैर्जनैः सैव च दुर्गताकृतिः ।
अदृष्टमप्यर्थमदृष्टवैभवा-
दवाप्य सेनापतिना व्यधीयत ॥३१॥
नलोदयस्याप्यनलोदयादभू-
दभूतपूर्वा स्थितिरागमेजमा ।
भवेदवस्थेयमहो ! क्षितौ न यां
करोति सुप्तिर्जनदृशनानिमिम ॥३२॥
निमीलितादक्षियुगाच्च निद्रया
नलात प्रणष्टारिवधूजनेन सः ।
अवीक्षितोऽपि क्षितिशायिनेक्षितः
स्मरादिवोग्रैः कचवालचालकः ॥३३॥

१ निद्रया निमीलिताद् नेत्रयुगाद्वीक्षितः । २ स्मरात स्मरः=ध्यानं ततः । ३ पक्षे कचवालाः=केशास्तेषां चालकः कन्दर्पात् कचग्रहणपरः ।

[1]परासुताप्तावपि नायकेऽभवद्
हृदोऽपि बाह्येन्द्रियमौनमुद्रितात् ।
सविभ्रमा चक्रिणि वैरिणो वधूः
[2]स्मरेऽतिविस्मेरदशाप्यथाद्भुता ॥३४॥

[3]छलत्स्खलत्पाद-प-यो-गतो वने-
नलादपि प्राप्तभयो भयोज्झितः ।
अदर्शि संगोप्य कदाप्यर्वाक्षितः
प्रमीलया वा-धनलीलया निजः ॥३५॥

अभूत् [4]सुरङ्गक्षणना रिपुस्त्रियो

१ मृतत्वप्राप्तौ । २ स्मरे जाग्रद्दशा । ३ छलेन स्खलन् स चासौ पादेषु=पर्यन्तपर्वतेषु पयसं गतः । नलः=स्वस्थानम्, अनलो वा ततः प्राप्तभयः । अर्वाक्षितः=अविमृष्टः । यद्वा अर्वां क्षिणोति अर्वाक्षित=अजापालस्तस्मात् तस्य वा । प्रमीलया=निद्रया । संगोप्य कदापि निजः अदर्शि 'निजैः' इति शेषः । निजः पुरुषः सगोत्रैः स्वप्ने दृष्टः, यद्वा अधनत्वे न दृष्ट इति भावः । वाधनलीलया=दुःखलीलया; अधनलीलया=दरिद्रभावेन शत्रुः सेनया लीलया यद्वा वा दरिद्रः कृतः । कीदृशः निजः, छलेन स्खलत्पादं यथा स्यात्तथा पयसं जलाय जले वा गतः । भया=दीप्त्या उज्झितः=त्यक्तः । ४ 'सुरङ्गा' इत्युणादौ तथाप्यत्र अंगेषवलात् 'सुरङ्गा' इति लोकोक्तिः । सुरङ्गा=भूम्यन्तरमार्गस्तद्दर्शनता, पक्षे रङ्गदर्शनम् ।

द्विषश्च सिंहासनभूः क्षमाभृतः ।
सर्माहिता येव भुवाश्चिरोदयी
रहस्यमस्याः स मदन्महीपतिः ॥३६॥
अहो ! अहोभिर्महिमा हिमागमे
प्रपद्यते द्योतिभिरन्वहं यथा ।
तथा महोभिर्गरिमाऽरिमारणाद्
रणादवाप्यस्य समं स्वमेनया ॥३७॥
गृहोन्मुखीं भूरिदिनैर्यियासती-
मभिप्रपेदे प्रति तां स्मरार्दिताम् ।
नृपोऽनुकम्पां चलनेऽतिगौरवात्
ततो गिरेः प्रापदुपत्यकां त्यकाम् ॥३८॥
स्वर्गाचलेऽप्याविरभूच्चलाचला
प्रजा प्रजारक्षणवार्त्तयाऽर्त्तिभृत् ।
तपर्त्तुपूर्त्तावपि मेदसां भराद्
न लेभिरे स्थूलनरा हि के व्यथाम् ? ॥३९॥

---

१ सिंहासनं भूर्गुहा। २ क्षमाभृतः=पर्वतस्य राज्ञो वा। ३ गृहस्मरणेन पीडिताम्। ४ त्यामेव त्यकाम्, त्यद्शब्दस्य कप्रत्यये रूपम्।

दरादराद।ऽऽश्रितकन्दरान्तरा
निरन्तरायास्थितया तया नगे ।
दिनानि हीनानि समान्यऽ[1]मान्यमा-
विभावरीभिर्विभरांबभूविरे ॥ ४० ॥

स्वकान्तिकीर्त्तिस्रजमौक्तिकस्रजं
स्वतो गुणं योजयताऽऽ[2]शुगानुगम् ।
[3]जिनेन को[4]दण्डकरेण [5]सानुगं
नृपं समुद्दिश्य गुणो न योजितः? ॥४१॥

खगाद्रिराजं समरेष्वतन्द्रितं
श्रयन्त्यनन्तघटनागुणश्रियम् ।
पराक्रमः पञ्चमचक्रिणः क्रमा-
न्निवार्य चक्रं [6]क्रमसेवनोन्मुखम् ॥४२॥

१ अमानिनी=मानरहिता या अमाधाः=अमावस्या विभावर्यो=रात्रयस्ताभिः समानि=तुल्यानि दिनानि तया=प्रजया विभरांबभूविरे । २ आशुगः= बाणः, वायुर्वा । ३ जिनेन कः गुणः=संधि-विग्रहादिर्न योजितः सानुगं पर्वतस्थक्रमथं नृपमुद्दिश्य । ४ दण्डः करे यस्य तेन । ५ सानुगं=अनुगैः=सेवकैः सहितं यथा स्यात् तथा । ६ क्रमसेवनं=पादसेवा, यद्वा चक्रिणां=ऽनन्तरा संततिपरम्परा ( क्रमः ) ।

विराजिराजन्यजनस्य धोरणे-
रणेरणे दारुणरूपमपंदः ।
कदाचिदस्या युवधैर्यलोपिनं
जयं निशम्याजनि राजनिग्रहः ॥४३॥
नृपः प्रसन्नो हि धनाय साधने-
स्तदन्यथाऽयं निधनाय बाधनैः ।
खगाद्रिराजोऽस्य निदेशदेशने
नैलोपिलोकादशृणोद् गुणोत्करम् ॥४४॥
तमेव लब्ध्वावसरं ततः स्मर-
स्वरूपभूपाय खगाचलेश्वरः ।
निजाङ्गनापूर्वमपूर्ववस्तुभिः
कृतनाधिकोपाय-नमन्मुदेऽभवत् ॥४५॥
वरैरमुष्याभरणैर्मणीमयैः
शरीरशोभाजयजातमत्सरः ।

१ खगाद्रिराजः अस्य=चक्रिण इति गुणोत्करमशृणोत् । २ आज्ञायाम् । ३ नलोपी ईदृशो यो लोकः प्रत्ययितस्तस्मात् । नञ्प्रतिरूपकेण 'न' इत्यनेनाव्ययसमासः । ४ भूपाय कृतनाधिकोपाय नमन्, पक्षे कृतं यदधिकम उपायनं तेन मदयति हृष्यति यः स कृतनाधिकोपायनमत्, क्विपि रूपम ।

तदा परः कोऽपि युयुत्सयाऽपतद्
बलस्य नाशाय ससौप्तिकाशया ॥४६॥
शराशरि व्यक्तगदागदि क्रुधा-
ऽऽयुधाऽनुधावद्भटकोटिदारुणः ।
अमोघशक्त्या निजयैव मूर्त्तया
रणोऽभवद् भूरिभयाय भूभुजाम् ॥४७॥
अनीकिनीनामधिपैरनेकशः
स युध्यमानोऽपि निरुद्धमानमः ।
स्वसेनया कोऽपि विमुक्तमार्गण-
स्तया विनिर्जेतुमियेष नैषधम् ॥४८॥
अकारि येन श्रवणातिथिर्गुणः
क्षणं परिक्षिप्तमहास्त्रमार्गणः ।
विभिद्य सेनापतिना शरैरुरः
पुरःप्रदीपे स यमातिथीकृतः ॥४९॥
मनःप्रसत्त्या विजयः श्रुतो धृतः
क्षमाभुजा भीमनृपात्मजालयः ।

१ भीमनामा यः नृपात्मजो=राजपुत्रः स एव आलयः स्थानं यस्य सः, विजयविशेषणम् ।

प्रदाय तस्मै गजवाजिराजितां
यथेच्छया देशभुवं पराजिताम्[1] ॥५०॥
ततः प्रयाणादवतीर्णकन्दरा-
प्रपातदेशस्य नृपस्य तत्परम् ।
तदुच्चधैर्यव्ययमंहितगुणा-
ऽरिणा[2] रणोऽभूदरिणाऽसृजाऽरुणः ॥५१॥
क्रमेण सेनाशनिनाऽर्हदाज्ञया
बलेन जिग्ये सुरसिन्धुनिष्कुटम् ।
वशीकृतस्तत्र वसन्मनोऽङ्गिना[3]
स्मरेण च स्वात्मशरासनाश्रयः[4] ॥५२॥
अमुष्य धीरस्य जयाय साहसी
वशीकृतश्चक्रमुचा स चक्रिणा ।
ततः प्रयाणे गजवाजिराजिभिः

१ परैः अजिताम् । २ अरिणा=वैरिणा सह रणः, अरिणा=चक्रेण, असृजा=रुधिरेण अरुणः=रक्तः । ३ अङ्गिना=मूर्त्तिभृता कन्दर्पेण तेन जनः वशीकृतः । ४ स्वं=धनम्, आत्मा=निजः तस्य शराः=आसनानि तेषामाश्रयः=आधारः । पक्षे धनार्पकः देहेन शराणां=जलानाम् आसनानि वहमित्यर्थः "शरं जले शरः पुनर्दध्यसरे काण्डतेजनयोरपि" इत्यनेकार्थः ।

समं समादाय समा विभूतिकाः ॥५३॥
वेलाध्वनि द्वेषिबलं दधद् ध्वनिं
तदा खलु ज्यां विशिखैः सनाथयन् ।
पुरस्सरीभूय चमूपतिः स्वयं
रुरोध तत्प्राणघ्नबाणसंचयैः ॥५४॥
पुरः स्फुरन् कोऽपि सुरश्रमं सृजन्
भयानुगं भैरवफेरवारवैः ।
निमज्जयामास यशांसि संशये
युयुत्सुरस्या विविधायुधैः क्रुधा ॥५५॥
तदा तदावेशविनाशनाशया
पुरन्दरः सुन्दरधीरुदायुधः ।
यशांसि तेनेऽस्य जयोदयादनु
स्मरंस्त्रिलोकीविजयार्जितान्यपि ॥५६॥
अनेन भर्मी घटयिष्यतस्तथा-
ऽप्यमित्रभावादनुगां बलस्य च ।

---

१ समाः=सकलाः, विभूतिकाः=विभूतीः । २ सैन्यमार्गे ।
३ 'कृपाणपाणिः सह सेनयाऽरुधत्' इति वा पाठः । ४ प्राणान् घ्नन्ति=खण्डयन्ति प्राणघ्ना बाणास्तेषां संचयैः ।

अभूद् विलम्बः सुगमिन्धुमैकते
कृताष्टमस्यापि जिनस्य चक्रिणः ॥५७॥
प्रसन्नया स्वःसरिता तनूभृता
विधेरवन्ध्यच्छलया व्यलासि तत् ।

विबुद्धपद्माननया सविभ्रम-
प्रकाशवद्दर्शनयाऽभ्ययौद्[1] नृपः ॥५८॥
मरालगत्या[2]-विलसत्तरङ्गया
न गङ्गया निर्मितचङ्क्रमङ्गया ।

अभेदि तत्तादृगनङ्गमार्गणै-
[3]र्मनोऽस्य नारीवपुषाऽपि च प्रभोः ॥५९॥
कृतं मनोभूवशवर्त्ति कान्तया
सरोजकोशस्तनहंसकम्पृशा ।

बलं तया तत् ममभेदि मार्गणै-
र्यदस्य[4] पौष्पैरपि धैर्यकञ्चुकम् ॥६०॥

१ 'अयौत्' इति क्रिया 'यु मिश्रणामिश्रणयोः' । २ आविला=रागेण कलुषा सत्ता=सद्भावो यस्य ईदृशो रङ्गः=चित्ताभिप्रायो यस्यास्तया, पक्षे विभिः=पक्षिभिर्लसन्तस्तरङ्गा यस्यां सा तथा । ३ अस्य=प्रभोर्मनः स्त्रीरूपधारिण्या गङ्गया न अभेदि । ४ अस्य बलस्य अर्थाद् भटस्य ।

किमन्यदद्यापि यदस्त्रतापितः
शिवो वशीन्द्रः शिवया वशीकृतः ।
स्मरेण लक्षीकरणेऽपि लक्षशो-
ऽप्यलक्षधीर्नाप्यत लक्ष्यतां प्रभुः ॥६१॥

हरिर्यदासीज्जलधीहिताश्रयः
पितामहो वारिजमाश्रयत्यहो ! ।
अनङ्गजं तापमुपेत्य, सोऽप्यभू-
ज्जिनेश्वरोऽनङ्गज एव साङ्गजे ॥६२॥

मदङ्गमङ्गं कुलशीलशालिनां
मितां निजाज्ञां दधतं स्वरूपतः ।
स्मरं तनुच्छायतया नमात्मनः
परं प्रभुर्नाक्रमितुं मनोभवः ॥६३॥

प्रमाथितेऽस्मिन् भरते महाभुजा
जनोऽपि नानाविषयान् प्रपन्नवान् ।
सदागतामक्तरुचिः सरित्तटं

१ निष्कपटमतिः । २ न लक्ष्यतां=वेध्यनाम आप्यत । ३ जलधौ ईहितः=वाञ्छित आश्रयो यस्य । ४ अनङ्गजः=अपुत्रः=वन्ध्य इत्यर्थः । ५ साङ्गजे=सपुत्रे ।

शशाक शङ्के न स लङ्घितुं नरः ॥६४॥

उरोमुवा कुम्भयुगेन जृम्भितं

मनोभुवो दुर्गधिया जिघृक्षतः ।

चमूपतेः माऽरमतोद्भवे निशो-

ऽप्यतीरभावेन मतिः सतीरते ॥६५॥

क्रमात् प्रयाणेऽस्य पुरस्सराः पुरां

नवोपहारेण वयस्कृतेन किम् ।

अधीश्वराः स्वानुगतां गताः स्वयं

प्रमाद्य भेजुः सकलास्तमुद्धलम् ॥६६॥

जयादहंपूर्विकया स्ववाहिनी

ससाहसोत्साहतयाऽवगाहिनी ।

त्रपाः सरिद्दुर्गमपि प्रतीर्य मा

स्वतः परावृत्त्य ददौ स्वदौर्जने ॥६७॥

स्वदुर्गभङ्गे भवनेऽवनेर्जने

वने विलभे जडता हसत्त्रपा ।

---

१ चमूपतेः=नैषधस्य सतीरते मतिः अरमत २ अपाङ्गतया ।

३ स्वतः=धनात् = धनं गृहीत्वा त्रपा ददौ दौर्जने=दुर्जनसमूहे ।

भयाद्[1] रिपूणां नृपतेः स्फुरन्महो-
ऽनेलस्य[2] तन्वी[3] हृदयं विवेश यत् ॥६८॥

अपह्नुवानस्य जनाय यन्निजाः
प्रजाः क्वचिच्छेलवनादिषु द्विपः ।
मृगेक्षणानामभवच्चला दृशा
मृगेक्षणानामिव भूमिभृद्भयात् ॥६९॥

अजन्यतश्चञ्चलया दधद् रिपो-
रधीरतामस्य कृतं मनो भुवा[4] ।
अनाधिपत्यं दिशतीममुं स्वतः
स्वतः स तत्याज मगराजताम्[5] ॥७०

धवे भुवां वा विधवे वधूजने
द्विषां वियोगादसुखं यदुन्मुखम् ।
अबोधि तज्जागरदुःखसाक्षिणी

१ रिपूणां हृदयं जडता विवेश नृपतेर्भयात् । २ "अनलोऽनिले वसुदेवे वर्ण्मी वह्नौ" इत्यनेकार्थः । ३ तन्वीव तन्वी तनूपमा । ४ भुवा भूम्या अस्य=चक्रिणः रिपोर्मनः अधीरतां दधत् कृतम् । किं० भुवा, अजन्यतः=युद्धात् चञ्चलया । अमुं भुवं सः=रिपुः स्वत एव तत्याज । ५ राजराजता=ऐश्वर्यं तेन सहितां भुवं तत्याजेत्यर्थः ।

तडागभागस्थरथाङ्गपक्षिणी ॥७१॥

समुच्छलद्वाजिरजोभिरञ्जमा

नभस्तले संतमसाकुले-रिपोः ।

पुरश्चलच्चक्ररुचा-सुहृत् कृता

निशा च शय्या च शशाङ्ककोमला ॥७२॥

नृपप्रतापाम्बुजबान्धवोदये-

सुहृद्वधूनामिव वर्धने श्रियाः ।

१ चक्रवाकी । २ अरिपोः=मित्रस्य निशा सुहृत्=प्रिया कृता पुरश्चलच्चक्ररुचा शशिसुन्दरा । रिपोः=द्विषः चक्ररुचा असुहृत=प्राणहरी निशा कृता: शय्या शशानाम् अङ्कः=चिह्नं यस्या ईदृशी कोमला च "कोमलं मृदुले तोये" । ३ सैन्यं चक्रं वा । ४ असु=प्राणं हृद् येषामीदृग्रिपूणाम् : सुष्टु हरतीति सुहृत्-चौरः । नृपेति० चक्रिणः प्रतापसूर्योदये सति मित्रस्त्रीणां भोगादिना निशा प्रियाऽभवत् । प्रतापसूर्यस्य नित्यत्वात् चौरस्त्रीणां न प्रियाऽभवत्, रात्रौ चौर्याधिकारात् चौर्यप्रवृत्तेरभावात् । यद्वा, अकारप्रश्लेषाद् असुहृद्वधूनां रात्रिः प्रिया नाशनावसरत्वात् । सुहृन्मृगीदृशां=मित्रस्त्रीणां रात्रिर्न प्रिया, प्रतापसूर्यस्यास्तप्रापणशङ्कया इव । वर्धनं=छेदनं वृद्धिर्वा । धनप्राप्तौ स्त्रीणामन्तःपुररूपत्वेन निशायां कार्यकरणादिना प्रियत्वम असूर्यंपश्यत्वात् । पक्षे धनच्छेदने वनेऽपि यथेच्छं भ्रमाभावाद् निशा प्रिया निरलंकारवसनत्वेन न स्यात् । शशानां जीवानाम् अङ्कः=चिह्नं तेन सुन्दरा च न स्वभूमेः ।

प्रियाऽभवत् सा-न-सुहृन्मृगीदृशां
निशा च शय्या च शशाङ्ककोमला ॥
स्मरोपतप्तोऽपि भृशं न स प्रभुः
प्रभोर्निदेशेन विना कदाचन ।
चमूपतिर्भीमभुवा कनिष्ठया
वशीकृतस्तां परिणेतुमुत्सधीः ॥७३॥
नृपस्य तद्भावविदो निदेशतो
विदर्भराजं तनयामयाचत ।
रसेन सेनापतिरप्युदूढवान्
निगूढभावामपि तां तदन्तरे ॥७४॥
कृपाणतः केचन केऽपि चक्रतः
परेऽपि तन्मार्गणवेधमार्गतः ।
त्यजन्त्यमून् शर्म च मानिनो वरं
भुवि स्म मन्येऽस्य समीपमागते ॥७५॥
अयाचितैरेव तयाश्रितैर्जया-
दुपायनैरागमनादुपार्यनम ।

१ परिणेतुं=न प्रभुः=न समर्थः । २ चमूपतिः=सेनापः । ३ मार्गणाः=बाणाः । ४ मार्गम ।

कृतः प्रसन्नः स यतो महाशया-
 स्त्यजन्ति न त्वेकमयाचितव्रतम् ॥७६॥
मृषा विषादाभिनयादयं क्वचिद्
 नृपाय नूनं नमते स्वतेजसा ।
तदायदुर्णीतिनिवारणेच्छया
 रणेच्छया स्वक्षुधमप्युपादिशत् ॥७७॥
यदा प्रयाणान्तरितापि भीमजा
 जुगोप निःश्वासतति वियोगजाम् ।
मिषेण केनाप्यवगम्य तज्जनाद्
 निनाय तां क्वाप्यवलम्ब्य संनिधिम् ॥७८॥
नवाप्यथासन् निधयः श्रियोऽनुगा
 भुवो निगूढा अपि साधनात्प्रभोः ।
विलेपनस्याधिकचन्द्रभागना-
 र्पणात्सितास्या इव मुद्रयान्तिके ॥७९॥
क्वचिच्च दानावसरे विमुद्रणाद्

---

१ नवापि नवसंख्या निधय आसन् । २ भूम्यन्तरे । ३ विलेपनमत्र मुद्रणाय कृतं तत्र कर्पूराधिकक्षेपात् । ४ सितास्याः= प्रसन्नास्या उज्ज्वलाननाः, 'षिञ् बन्धे' निबद्धास्या वा ।

विभेद शङ्खस्य निधेः स धैर्यकम् ।
मुखे तथा भीमभुवोऽर्धचन्द्रता-
विभावनाच्चापललाप पाण्डुताम् ॥८०॥

शशाक निह्नोतुमयं न तत्प्रिया
प्रियाशयं साम यदा स चाश्रयन् ।
तदीयकोपस्य जिहासुरुत्तमा
तदा चकारानुनयं नयं विदन् ॥८१॥

पुरःस्थितां तामनुनीय साशय-
मयं बभाषे यदलीकवीक्षिनाम ।
क्षितीश्वरः किं क्षितिमीक्षसेऽधुना
मयि प्रिये विप्रियमादधामि किम् ?॥८२॥

ततः प्रियामित्यनुनीय सत्वतः
समाधिमाधाय निजात्मनात्मनि ।
समाज एवालपितासु वैणिकैः
प्रणीतवीणासु रराज राजाभिः ॥८३॥

---

१ अधिकस्वर्णभूषणादिप्रकटनाम् "चन्द्रोऽम्बुकाम्ययोः स्वर्णे सुधांशौ कर्पूरे कम्पिल्ये मेचकेऽपि च" इत्यनेकार्थः । २ "पाञ्चालः स्त्रीषु मार्दवम्" इति नीतिम् ।

सधर्मधीः कर्म मशर्मनर्मणे
प्रवर्तयन् मद्यवहारधारणः ।
न वीतरागः स विनिश्चयात् पुन-
र्मुमूर्च्छ यत्पञ्चममूर्च्छनास्वपि ॥८४॥

अवाप मापत्रपतां स भूपति-
र्गुरुत्वमन्यत्र[1] नयाय शिक्षयन् ।
प्रशास्यमुद्दिश्य दयादमक्रमं
पुरः पुरश्चात्मविबोधनक्षमम् ॥८५॥

दधार यो वा[2] रणेऽतिकौशलं
जितेन्द्रियाणां धुरि कीर्तितास्थितिः ।
दधारयोवाच[3] रणेऽतिकौशलं[4]
स मार्गणीये[6] विषयं[7] श्रयन्[8] स्वयम् ॥८६॥

पुरः प्रयाणे न्यरुधद् न कोऽप्यमुं
यियासुमग्रे खलु हास्तिनापुरम् ।

१ अन्यत्र=लोके मापत्रपतां शिक्षयन । २ यो रणे इति कौशलं दधार । ३ द=दान तत्र धारया=जलस्य निरन्तरतया उवाच । ४ रणे=शब्दे श्रुते । ५ अयोध्यामतिक्रान्तम् । ६ मार्गणीये=याचकसंबन्धिनि, 'रणे' इत्यस्य विशेषणम । ७ विषयं=देशम् । ८ श्रयन्=भजन् ।

असंवरेऽसंवरवैरिविक्रमे
विना श्रमं भङ्गमुपेयुषि क्रमात् ॥८७॥
असाधयत् साधनमप्यबाधया
स भारतं प्राप्य जयादनारतम् ।
प्रताप भानावुदयाद्रिसानुनि
क्रमेण तत्र स्फुटतामुपेयुषि ॥८८॥
अलं नलं लङ्घुमितःसमक्षमी
भ्रमीर्भजन्तो रिपवोऽस्य कानने ।
क्वचिद् विसृष्टं विषमस्थलेऽचलं
जलेऽतिदुर्गं स्वत एव दुर्गताः ॥८९॥
नयं विनिन्युः प्रचलन्नृणां बलं
गुणा विवेकप्रमुखा न चापलम् ।
ततः सुखायाजनि तन्निवेशनं

१ पुरःप्रयाणं कीदृशं, असंवरं="संवरो पाल्यालिसंवराः" इति कोषात् संवररहिते। "शम्बर जले चित्रे बौद्धव्रतभेदे शम्बरो दानवान्तरे मत्स्यैणगिरिभेदेषु"। असंवरः=प्रबलः वैरिविक्रमः। २ "विना श्रमं नश्यति तस्य तेजसा" इति वा पाठः। ३ पर्वतादौ स्थानविशेषम्। ४ स्वतः=धनात्, दुर्गताः=दरिद्राः। ५ बलं गुणा नयं=नीतिं निन्युः, न पुनश्चापलं=चपलत्वं निन्युः।

स्वसीम्नि देशेऽपि च तत्प्रवेशनम् ॥९०॥
नयप्रवादी प्रतियानमानदन्
पटुः पदव्यां पटहस्तथार्हतः ।
[1]स्मरः [2]सरन्त्याम[3]निरुद्धमेव यद्
विरुद्धतां वारयति स्म संगतौ ॥९१॥
नृपे प्रजायां सकृपर्नयाव्यया-
दनीतिकृद् भीतिमुपैति दुर्जनः ।
रविच्छविनों क्लिमुल्कमूकतां
सृजत्ययं सर्गनिमर्ग ईदृशः ॥९२॥
[4]अनङ्गचिह्नं स विना शशाङ्क नो
प्रवक्तुमन्यत् तदनन्यमानसः ।
[5]यथा भवे भावि तथैव भावना
पुरः स्फुरेद् धातुरिहातुरे हृदि ॥९३॥

---

१ स्मर्यते इति स्मरः=लोकैः स्मरणयोग्यः । २ सरन्त्यां=चलन्त्यां पदव्यां=एकपदीमार्गविशेषे । ३ अनिरुद्धं=चपलं नरं विरुद्धतां वारयति स्म । ४ अनङ्गा इह सिद्धास्तेषां चिह्नं ज्ञानं विना । ५ यथा भावि=अनागतं वस्तु भवे=संसारे, तथैव भावना धातुर्मनसि पुरः स्फुरेत् ।

अलं विरक्तोऽपि न राज्यधूर्भराद्
यदासितुं संसदि यत्नवानपि ।
नियोगिनोऽप्यस्य स योगिनाऽङ्गिनो
विनोदहेतून् विदधे सदःसदः ॥१४॥

ततः समुत्थाय वने तपस्विना
यशस्विनाऽनेन समं समागितुम् ।
क्षणं तदाराम विहारकेनवा-
दभाजि राजापि नदीयमण्डलम् ॥१५॥

तदन्तरं दन्तुरिते नभोऽन्तरे
शरैश्चलद्भिः करवालचालनैः ।
निदेशलाभाय नरेशपेशलं
निषेवितुं देशमियाय नैषधः ॥१६॥

अथ श्रिया भर्त्सितमत्स्यलाञ्छनः
कचित् परोपप्लुतमण्डलश्रुतेः ।
स यानहेतुं पटहं स्फुटं दृशा-
प्यवीवदद् योधविबोधनोन्मनाः ॥१७॥

१ मुक्त्वा । २ सदसि सीदन्तीति सदःसदः तान्
३ रादूरादः तत्र तृतीया ।

स्वतन्त्रमामन्त्रणयाऽप्यमीमिलत्
समं वयस्यैः स्वरहस्यवेदिभिः ।
चलाचलं भूपवलं क्रुधा ज्वलद्
महोज्ज्वलं स्वामिविधेर्विधित्सया ॥९८॥

क्षितीशिता मन्यपतेर्गिरा गुरुः
स्वतेजसे वाऽगरुवद् रिपून् दहन् ।
पुरोपकण्ठं मत्वनं किलेक्षिता
न्यवेशयद् वस्त्रकुटीः पटीयसीः ॥९९॥

स्वयं समारोढुमना निगूढधी-
स्तुरङ्गमं निस्समममष्टमङ्गलम् ।
रयादुपानेतुमहेतुयोगतो
दिदेश यानाय निदेशकारिणः ॥१००॥

अमी ततस्तस्य विभूषितं सितं
यशोभिरीशस्य दिशोऽभितः स्थितैः ।
अतुच्छपुच्छे तदुरःखुरे पुनः
सुपर्णकीर्त्येव च मूर्त्तया श्रितम् ॥१०१॥

उपाददुस्तस्य तुरङ्गपुङ्गवं

जवेऽपि मानेऽपि च पौरुषाधिकम् ।
धरां समुत्सृज्य नभो यियासया
निजक्रमैराक्रममाणमुच्चकैः ॥१०२॥
हयं सपक्षैरुभयांशसंगतै-
र्नरेशवल्गाञ्चलरूपशालिभिः ।
द्विधा विपक्षं किल जेतुमुद्यतं
परेऽपि मत्वाऽमरं परं पुरः ॥१०३॥
उदीतपक्षैरिव सादिनि स्थिते
तदंशुकस्योभयपार्श्वतोऽञ्चलैः ।
उपाहरन्नश्वमजस्रचञ्चलै-
रमी विहङ्गैः सह यातुमुत्सुकम् ॥१०४॥
दिशां जयायोद्धुरमाधने मयि
नवं धनं साधु न बन्धनं पुनः ।
इतीव रोषादतिशायिपौरुषात्
खुराञ्चलैः क्षोभितमन्दुरोदरम् ॥१०५॥
अथान्तरेणाऽत्वरगामिनाऽध्वना-

१ वीनां पक्षं वैरिणं वा गमनस्पर्धया, यद्वा विपक्षं=गरुडं वपुकान्त्या । २ अञ्चलैः=प्रान्तैः । ३ अमी=सेवकाः ।

ऽऽशयेन हेषारवमाप्तुमुद्यतम् ।
अहंकृतिः शुद्धमतेर्न संगता
हिताय लोकैरिति मौनमागतम् ॥१०६॥
यथा मुखे पृष्ठपदे तथा स्थिति-
र्निशीथिनीनाथमहःसहोदरैः ।
कचैरितीवाश्रितमुज्ज्वलैरलं
निगालभागेऽप्युरसा समैः समैः ॥१०७॥
महोदयं स्वामिनि कामितं जया-
दुपादिशद्भिः परितस्तथोर्ध्वगैः ।
निगालगाद् देवमणेरिवोत्थितैः
खगैर्मयूखैरिव सेवितं पुनः ॥१०८॥
प्रभावभारैर्भविता स भूमिभुक्
समारुहन् मा सविता सहस्ररुक् ।
सदावदातैरिति मञ्जुराजिभि-
र्विराजितं केशरकेशरश्मिभिः ॥१०९॥
अजस्रभूमीतटकुट्टनोद्धतै
रजोव्रजैर्दूरत एव गत्वरैः ।

विरोधभावाद् मलिनैस्तनुत्विषा
विषादयोगादिव नाश्रितं क्वचित् ॥११०॥
भुवः स्वमातुर्विरहासहैः पुन-
रुपास्यमानं चरणेषु रेणुभिः ।
पतद्भिरेतत्सहनं चिकीर्षुभिः
पदप्रणामे हि सतां प्रसन्नता ॥१११॥
सुवर्णपर्याणमणीमयाण्डजै-
र्विचित्ररूपैः परितोऽनुवेष्टितम् ।
रयप्रकर्षाध्ययनार्थमागतै-
स्तदीयनाम्न्याभिधयाऽधिभूधिया ॥११२॥
सपक्षभावात् भ्रमरैः सरस्वतां
दिदृक्षुभिर्मङ्क्षु रजःकणच्छलात् ।
पदप्रसक्तैः सततं समन्वितं
जनस्य चेतोभिरिवाणिमाङ्कितैः ॥११३॥
चलाचलप्रोथतया महीभुजं
निबोधयन्तं च सुगन्धिबोधने ।

---

१ कृत्रिमपक्षिचित्ररूपैः । २ अधिभू=स्वामी तादृश्यः तद्बु-द्ध्या ।

चतुष्पदेभ्यः प्रणयेऽपि चाधिकं
स्वमश्ववर्गे पुरुषे मुखावहम् ॥११४॥
रवेरवेक्ष्याश्वगणे गतेर्भिदः
स्ववेगदर्पानिव वक्तुमुद्यतम् ।
तदीयशिक्षाविधये वियत्कृत-
क्रमं सिसृक्षुं त्वदमीयमान्द्यतः ॥११५॥
क्व सूरसूतानुजधीः क्व मे प्रभा
द्युनाथजस्येत्यभिधातुमुत्सुकम् ।
अलं गिरा वेद किलाऽयमाशय
महाशयश्चेति विमृश्य मौनिनम् ॥११६॥
विजेतुमुच्चैःश्रवसं हयं हरे-
र्भयादिवोच्चैर्ध्रुवमुल्लसत्पदम् ।

१ प्रणये=स्नेहे, च=पुनः सुगन्धिस्थाने स्वम्=आत्मानम् अधिकं राज्ञे ज्ञापयन्तम् । २ प्रत्यहं भिन्नभिन्नगतिभेदान । ३ अमीषां रवि-हयानाम् इदम=अदमीयं मान्द्यं=मूर्खत्वं गतिमन्दतां वा । ४ गरुडः । ५ 'अश्वाः सूर्यादुत्पन्नाः' इति कविसमयः । ६ उच्चैः-श्रवसं विजेतुमिव उल्लसत्पदम् उच्चैर्लसन्तौ पदौ क्रमौ यस्य तम् । हरेः=इन्द्रस्य मम स्वर्गाश्रिणः हयस्य गतौ मनः मा व्यरा-ङ्क्षीदिति हेतोर्मौनमास्थितम् । मौनमिह संवरं निवर्तनं शनैश्च-रत्वमाश्रितम् इति भयाद् ध्रुवम् ।

न वैमनस्यं घटते सगोत्रिणः
स्वयं हयस्येति च मौनमास्थितम् ॥११७॥

महारथस्याध्वनि चक्रवर्तिनः
परः[1] प्रयाणश्रवणाददुद्रुवत् ।
अमंस्त तत्राशरणः शरण्यता-
[2]मरण्ययोगस्य निशां विशां दिशा ॥११८॥

हयं तमारुह्य जयं पुरस्थितं
स मन्यमानः [3]प्लवमानमानसः ।
परानपेक्षोद्वहनाद् यशः सितं
प्रमोदकामोद[4]धियाऽविशद् वनम् ॥११९॥

चमूचराणामतिचारुखेलनैः
परस्परप्रेरणवादिमादिनाम् ।
रदावदातांशुमिषाद[5]नीदृशां
बभौ विभुस्तत् पिबतां यशोऽन्तरे ॥१२०॥

---

१ शत्रुः । २ अरण्यवासस्य तथा निशां=रात्रीणां शरण्यतां बुबुधे विशां=नराणां दिशा=मार्गेण । ३ प्लवमानं-विस्तीर्यमाणं मानसं=मनो यस्य सः । ४ आमोदो=हर्षः परिमलो वा । ५ अनीदृशां=द्विषां यशः पिबतां सादिनामन्तरे विभुर्बभौ ।

दर्दश तं सादिगणं समीरणै-
र्द्विधाकृतस्पर्धनवर्धनं प्रभुः ।
श्रमृत्वरैर्वाजिबलैश्च सत्वरै-
र्हमन्तमन्तर्बलमर्वतां रवेः ॥१२१॥

सितत्विषश्चञ्चलतामुपेयुष-
स्तुरङ्गरङ्गन्निवहस्य चास्यतः ।
श्रमात् पतत्फेनमिषाद्दरेर्यशो-
निपातनं मर्दनहेतु सोऽस्मरत् ॥१२२॥

विधूनतो वैरियशोऽधुनाऽधुनाद्[1]
मिषेण पुच्छस्य च केसरस्य च ।
तदा तदाश्वस्य पदात् पदान्तर-
स्पृशः समाश्वस्य जनानयं श्रमात् ॥१२३॥

प्रभोर्यशोऽपि प्रससार सर्वतः
क्षमातलं वाऽऽप्य[2] नभस्तलं पुनः ।

---

१ आश्वस्य पुच्छस्य च=पुनः केसरस्य विधूननः कम्पित-स्य मिषेण वैरियशोऽधुनात्=चकम्पे, अन्तर्णीगर्थः । किं कृत्वा, पदात्=स्थानात् पदान्तरस्थान् जनान् समाश्वस्य । अयं=चक्री ।

२ आप्य=प्राप्य ।

स्फुटं चलच्चामरयुग्मचिह्ननै-
[1]र्बभूव रूपं [2]तदखण्डपिण्डितम् ॥१२४॥
विनोदसिद्ध्यै स नुनोद सोदरं
गरुत्मतः स्वं पुरतोऽश्वमाशुगम् ।
सितातपत्रोद्भवदंशुमण्डलै-
रनिह्नुवानं निजवाजिराजताम् ॥१२५॥
अपि द्विजिह्वाभ्यवहारपौरुषे
[3]रुषेव धिक्कारकरे गरुत्मति ।
हयेऽधिरूढश्च वसुन्धराधवः
पराजयायैव [4]सदानवद्विषः ॥१२६॥
स्फुटीकृता श्रीरमुनेन्द्रधन्वनो
मुखानुषक्तायतवल्गुवल्गया ।
हयेन तत् किं न स चक्रभृज्जिनः
सहस्रनेत्राकृतिमान् भवेदहो ! ॥१२७॥

१ "स्वरूपमादर्शि मदीयमेव किम" इति वा । २ तस्य वपुः संपूर्णपिण्डितम्, प्रतिस्थानमखण्डनायोगात् । ३ रुषा इव=क्रोधेनेव । ४ सदा सर्वदा अनवाः=जीर्णाः, नवा वा; स चासौ; दानवद्विषः=कृष्णस्य पराजयाय=भङ्गाय ।

जिनो मनोभूविषयं स्वरूपतो
यमश्वमारुह्य जिगाय विस्मयात् ।
उपेयिवांसं प्रतिमल्लतां रय-
स्मये जयात्तं मनमः स्मरेन्न कः ? ॥१२८॥

विभुर्दधौ कांचन काञ्चनत्विषं
स्वकीयतन्वाऽद्भुततेजसा पुनः ।
तदा प्रभां वाहनमस्य तां रय-
स्मये जितस्य प्रसभं गरुत्मतः[2] ॥१२९॥

गच्छाधीश्वरहीरहीराविजया-
म्नाये निकाये धियां
भृत्यः श्रीविजयप्रभाख्यसुगुरोः
श्रीमत्तपाख्ये गणे ।
शिष्यः प्राज्ञमणेः कृपादिविजय-

१ जिनेन मनोभूर्विषयो जिनः तर्हि मनसः जयात् तं हयं को न स्मरेत्? मनसि भवतीति मनोभूः ईदृशो विषयः गोचरस्तं जिगाय वशीचक्रे=यावान् मनोगोचरस्तं सर्वं जिगायेत्यर्थः ।
२ नैषधीयस्य प्रथमसर्गस्य ६३ श्लोकः ।

स्योशास्यमानाग्रणी-

श्चक्रे वाचकनाममेघविजयः

शस्यां समस्यामिमाम् ॥१३०॥

इति श्रीनैषधीयमहाकाव्यसमस्यायां महोपाध्यायश्रीमेघविजयगणि
पूरितायां द्वितीयः सर्गः संपूर्णः ॥ श्रीः ॥



१ आशास्यन्त इत्याशास्यमानाः=शिष्याः ।

## ॥ अथ तृतीयः सर्गः ॥

स सिन्धुजं शीतमहःमहोदरं

जयन् यशोभिर्विजयौजसां भरैः ।

पुरःप्रयाणं प्रति हस्तिनापुरं

चकार कारुण्यधियाऽरुणीभवन् ॥१॥

नृपाधिरोह[2] परितो मनोहरं

हरन्तमुच्चैःश्रवमः श्रियं हयम् ।

सकण्टकैस्तैः सुभटैः स्फुटीभव-

द्घनाघनच्छायममंस्त हस्तिनम् ॥२॥

रिपूरगाणां विषये विपच्छिद

हरन्तमुच्चैःश्रवमः श्रियं हयम् ।

सं-वै-नते-यं तनुमन्तमन्तरा

१ सिन्धुजं=समुद्रजम्=ऐरावणं शीतमहसः=चन्द्रस्य भ्रातरं यशोभिर्जयन् । विजयतेजसा अहःसहोदरं=सूर्यम् । कथंभू० पुरःप्रयाणं शीतं शान्ततया शनैः शनैरिति । २ "नृपाधिरोहात् सुमनोमनोहरं" इति वा । ३ सः=चक्री वै=निश्चितं नते=नम्रीभूते हयम=अश्वं प्रसादेन प्रतिपादयन्=ददत् ययौ=चचाल । किं० हयं तनुमन्तं=मूर्तं अयं=शुभभाग्यम् । 'प्रसादात्' इति "गम्ययपः—(सि० हे० २।२।७४) इति पञ्चमी, प्रसादं प्रपद्य ।

नृपे प्रसादात् प्रतिपादयन् ययौ ॥
जयेन दीप्तः स निजाङ्गजन्मना
पुनर्जयन्त्या सुरमेनयान्वितः ।
जिताखिलक्ष्माभृदनल्पलोचन-
श्रिया तदैन्द्र्या रुरुचे विरोचनः ॥३॥
सहस्रदेवैः कृतमेवयेव यो-
ऽश्वरत्नमारोहद् बहुरत्नभूषणैः ।
पट्टकृतारात्रिकमुच्चशासन-
स्तमारुरोह श्रितिनाकशासनः ।४॥
निजा मयूखा इव तीक्ष्णदीधितिं
सरित्प्रवाहा इव पाथसां निधिम् ।
विरेजिरे राजसमाजराजयो
जयार्जितात् तं मृतसंगता गताः ॥५॥
निरीक्ष्य केचिच्चतुराः पुराधिपाः
स्फुटारविन्दाङ्कितपाणिपङ्कजम् ।
स्वतोऽपि विश्वंभरमेव मानसे
स्मृतिं दधानाश्चरणौ प्रपेदिरे ॥६॥

---

१ तं=भगवन्तं गताः=प्राप्ताः धृतमित्रभावाः ।

पथे चलन्तं यदि वा स्थितं रथे
तथेति तस्यैव मनोरथैरिताः ।
तमश्ववारा जवनाश्वयायिनं
वने जने वा प्रधने निषेविरे ॥७॥
स्थिते प्रभौ स्थैर्यधियश्चलाशये
नृपेऽचलायाः प्रभवश्चलाचलाः ।
परं शयानेऽप्यशयालवोऽद्भुतात्
प्रकाशरूपा मनुजेशमन्वयुः ॥८॥
चलन्नलंकृत्य महारयं हयं
स शक्रवच्चक्रधरो धराधरान् ।
प्रकम्पयञ्शेषविशेषभीतये
तयेह जज्ञे गजवाजिमेनया ॥९॥
करेण रेणोः स्वशिरस्यहो धृतात्
स्ववाहवाहोचितवेशपेशलः ।
जगाद सादी गजपालबालकं
करोत्ययं तत्समलं परालकम् ॥१०॥

---

१ अयं=तव करी रेणोः स्वशिरसि धृतात् परालकम्=अन्य-वेषिं समलं कुरुते=मलयुक्तं तनुत इति चित्रम् ।

कदाप्ययं पट्टगजे रजन् क्वचित्
स्ववाहवाहोचितवेशपेशलः ।
सुखासने वा नरवाहने स्थितो
द्रुतं ययौ चित्तनिलीनकौशलः ॥

(पाठान्तरम्)

मृगाक्षिलक्षैः समवेक्ष्ययं चलन्
बलादतुच्छोच्छलदध्वरेणुभिः ।
प्रमोदनिस्पन्दतरांक्षिपक्ष्मभि-
र्निरुद्धमानेक्षणमप्यनिक्षणात् ॥११॥

स वन्द्यमानोऽप्यनवद्यधीर्नृपैः
कृपाणपाणिः कृपणैर्निजौजसा ।
पदं दधानो न मदं मनागयं
व्यलोकि लोकैर्नगरालयैर्नलः ॥१२॥

क्षणादथैव क्षणदापतिप्रभः
प्रभानुसंधानकरः स्वमण्डलैः ।

१ उन्मत्त्वात् । २ यः पौरैर्न पूर्वं नलः=इन्द्रः व्यलोकि तैः अयं नलः=इन्द्रः व्यलोकि 'अयमेवास्ति इन्द्रः नास्मात् परः कोऽपीन्द्रः' इत्याशयः ।

अनीत्यधर्मादिषु हानिकृद् ययौ
नरैः परं गीतयशाः सकिंनरैः ॥१३॥
इतस्ततो द्विड्नगरप्रभञ्जनात्
प्रभञ्जनाध्येयजवेन वाजिना ।
जनान् विमुच्यैव गतं क्वचिन्निशि
द्विपा विषादेन विपाऽदनेच्छया ॥१४॥
महीभृताऽऽतिथ्यकृता प्रवेशितः
कृतार्थतामात्मनि जानता क्वचित् ।
सहैव ताभिर्जनदृष्टिवृष्टिभिः
पुरं पुनाति स्म स चक्रभृज्जिनः ॥१५॥
स तत्र चित्रेण दिनानि कानिचिद्
व्यतीत्य नीत्याऽनुदिनं नवोत्सवैः ।
सपौरलाजोपरिवर्षहर्षितं
बहिः पुरोऽभूत् पुरुहूतपौरुषः ॥१६॥
ततः प्रतीच्छ-प्रहृगतिभाषिणी
द्विधा विभक्तेव पुरस्मरा चमूः ।

१ किंनरसहितैर्नरैः । २ द्विपा=वैरिणा क्वचिद् गतम् ।

नृपस्य तस्योभयपक्षविस्तृता
जगज्जिघृक्षोरिव दोर्द्वयी बभौ ॥१७॥

बले नृपस्यानुगताग्रगामुके
परस्पराक्षामितशल्यपल्लवे ।
पयोधिवेले इव दुर्धरे नद-
त्त्रिरेखचक्राश्वगजे विरेजतुः ॥१८॥

प्रभोरलं दर्शयितुं निजं बलं
बलोत्कटास्तत्र भटा नटा इव ।
मृषा मृधं सादिबलं कुतूहलाद्
निबध्य वध्यस्य रिपोर्भियेऽभवन् ॥१९॥

जलस्य दुर्गं ह्यनलस्य संभवे
खलस्य कालाय युधे बले चले ।
निवेश्य तद्वारिपदार्थमानने
नलस्य नासीरगते वितेरतुः ॥२०॥

१ नलस्य=स्थानविशेषस्य आनने=मुखे जलस्य दुर्गं सति तस्य जलदुर्गस्य वारकं निषेधकं पदार्थं नौप्रमुखं निवेश्य बले द्वे वितेरतुः । अनलस्य संभवे वह्निसंसर्गे तस्य वह्नेर्वारकं पदार्थं जलवाहादिकं निवेश्य बले द्वे वितेरतुः=तरणं चक्रतुः ।

प्रयातुमस्माकमियं कियत्पदं
भवेत् त्रिलोकीति यशोऽस्य पिण्डितम् ।
मृगाङ्कतारागणतारकैतवाद्
नभस्यसंख्येयमपीह संख्यजम् ॥२१॥
पवित्रिता श्वेतपयोजमूर्त्तिभि-
र्धरा तदम्भोधिरपि स्थलायताम् ।
अखण्डडिण्डीरभरच्छलाद् यशः
समूढमित्यूढधियेव भूभुजः ॥२२॥
किमर्कजायाः समलं जलं भवेद्
हिमाद्रिरूपेऽस्य यशोभरे स्थिरे ।
इतीव वाहैर्निजवेगदर्पितै-
स्तदङ्गजैर्गाङ्गपदात्तदाश्रितम् ॥२३॥
यशःस्वरूपैस्तुरगैर्दिशां गणे
प्रसृत्वरैः श्वेततरैः पुरःखुरैः ।
स्वगातृसंस्थानधिया सुदुर्धरैः

१ असंख्येयम=अगण्यम् । संख्यजम=युद्धजं यशः । २ समूढं=समूहभावेन स्थितम् । ३ वाहैः=हिमाद्रिजातचुद्रजलप्रवाहैः । ४ पदात्=मिषात् । ५ तत्=यमुनाजलम् । ६ खगायकनरनिवासधिया ।

पयोधिरोधक्षममुद्धतं रजः ॥२४॥
हरेर्यदक्रामि पदैककेन खं
त्रिभिर्धरेत्येव चतुष्पदीफलम् ।
बभूव पूर्वं द्विपदस्ततोऽधिका
गतिर्हरीणामुचिता चतुष्पदैः ॥२५॥

यद्वा—

हरेर्यदक्रामि पदैककेन खं
त्रिभिर्धरेत्येवमभूत् त्रिविक्रमः ।
ततो हरीणामपि रोदसीक्रमा-
च्चतुष्क्रमत्वं चतुरब्धिलङ्घनात् ॥
दिशां न सोऽंशोऽस्तु न यत्र संगतिः
पदैश्चतुर्भिः क्रमणेऽपि तस्य नः ।
पराङ्मुखीभूय दिशोऽपरां दिश-
मिति व्रजन्तोऽभिममञ्जिरे हयाः ॥२६॥
दिवाकराश्वीयजिगीषयोद्धतं-

---

१ विष्णोर्द्विचरणभाजोऽपि यद्दुर्शनिकक्रन्याद्यनुभुंजन्त्यवन् चतुष्पदीफलं जातम् । तत्समयेऽपि दर्शादिनाद्यनुष्णःक्रणम ।
२ तस्य दिशोऽंशस्य क्रमणे दिशोऽवकाशाभावात् पराङ्मुखाः ।

हयैश्चतुर्दिग्विजयैर्नृपाश्रयैः[1] ।
त्रपा हरीणामिति नम्रिताननैः
प्रपद्यते वारुणदिग्रवेर्हयैः[2] ॥२७॥
गतं त्रपापात्रतया दिगन्तरे
महोदयं नः समवेक्ष्य पाक्षिकैः ।
दिनेश्वराश्वैरिति चक्रिमासिभि-
र्न्यवर्ति तैर्घनभःकृतक्रमैः ॥२८॥
चमूचरास्तस्य नृपस्य मादिनो
विनोदिनोऽप्यस्य दिनोदये जयम् ।
विधाय सर्वत्र विचित्रवादिनो
निवेदयामासुरथो रथोद्धताः ॥२९॥
अलंकृताः केचन राजवाजिनो
जिनोक्तिषु श्राद्धतयेव सैन्धवाः ।
शनैश्चरन्तश्च-रणऽतिकौशलाद्
धृतास्ययन्त्रा अपि निर्वृतिं दधुः ॥३०॥

१ नास्माकं सर्वदिग्जयः, किन्तु दयास्तदिग्द्वयमेव । २ नृपाश्रयैः हयैः कृत्वा त्रपा । ३ श्राद्धपक्षे मुखवस्त्रिकादि, अश्वपक्षे मुखयन्त्रणम् ।

निनंसुना भूमिभुजापि भक्तये
पदे पदे भूर्युपदा[1]प्रदायिना ।
विहारदेशं तमवाप्य मण्डली
निवेश्य चक्रीशमकार्यतानुगैः ॥३१॥
स्थितस्य त[2]स्यां पुरतो निजाङ्गजा[3]
[4]मतङ्गजाश्चाकरजा महाध्वजाः ।
उपायनान्ये[5]भिरमुष्य भूमिपा
अकारयन भूरिनुरङ्गमानपि ॥३२॥
द्विपाङ्घ्रिरेवास्य विलङ्घिना दिशः
पुरेषु दग्धेष्वयशोनिवेशनात् ।
प्रभञ्जनैर्दैवयशोरथायितं
प्रभञ्जनैर्वैरिपुरं धुरं बलात् ॥३३॥
यथेष्टदानाम्बुभिरम्बुधिः मरो
यशोभिरब्धिस्कारि गोष्पदम् ।
व्यधायि पूर्णा वसतिर्भुवस्तले

---

१ भूर्युपदा=स्वर्णढौकनम । २ मण्डल्याम । ३ अङ्गजाः=पुत्रिकाः । ४ मतङ्गजा इमाः महाध्वजाः । ५ एभिर्वन्तुभिः उपायनानि भूमिपा अकारयन ।

रिपुस्थले वाऽप्यमुना ह्यमानमा ॥३४॥
सुवर्णधारामवलोक्य मार्गणे
कृपाणधारां समरे समार्गणे ।
इतीव धारामवधार्य मण्डली
कृता घनैश्चापधरैस्तनूह्रिया ॥३५॥
भुजंगमैर्वक्रगता नृपाद् भिया
धृतं तलं शून्यपदं बिलासिभिः ।
विहंगमैः सा सकला ततश्चल-
क्रियाश्रियाऽमण्डि तुरङ्गमैः स्थली ॥३६॥
अचीकरच्चारुहयेन या भ्रमीः
भ्रमीं मनाग् नेति चमूचरः परम् ।
न्यवेदि यत् ताभिरलाभि तेऽरिणा
नरेश ! देशभ्रमिरेव नाश्रयः ॥३७॥

१ अमानमा=दर्शान्तिः, अमाना=अगणिता मा=लक्ष्मीर्वा । २ धनुर्धराणां मण्डलं स्थानविशेषः । ३ चापं=धनुः, पक्षे अपां समूहः=आपम । ४ बिलेषु आसने बिलासिनस्तैः, पक्षे विभिः=पक्षिभिर्लसन्त इति । ५ चमूचरः भ्रमीर्या न अचीकरत्, परं ताभिर्भ्रमीभिः इति न्यवेदयत्ः इतीति किम्, नरेश ! तव अरिणा भ्रमिरेव अलाभि ।

अयं समारुह्य हयं प्रभामयं
निजातपत्रस्य तलस्थलेऽनलः[1] ।
दिदेश नीराजनकर्मणे जनान्
महौजसाऽऽविष्करणाय तेजसः ॥३८॥

प्रभोः प्रभावर्द्धिविधौ समादधौ
सहायता[2] या मरुतां पतिर्भुवि ।
मरुत्[3] किमद्यापि न ताः सुशिक्षते
सदाऽप्यनालस्यधियाऽनले सुहृत् ॥३९॥

प्रभूतदूतैरपि यः कृताह्वो[4]-
ऽप्यनाश्रवो[5]ऽभूत् पुरुहूतविक्रमः ।
तदत्ययः प्रत्ययनः[6] कृतोऽमुना
वितत्य वात्यामयचक्रचंक्रमान् ॥४०॥

विवेश गत्वा स विलासकाननं

१ अनलः महौजसा । अग्रे स्वतेजसः प्रकटीकरणाय नीराजनकर्म कार्यत इति । २ सहायताः=मित्रभावो याश्चकार इन्द्रः भुवि=पृथिव्याम् । ३ मरुत्=वायुर्नागार्धांशप्रसङ्गेन अनले=वह्नौ सुहृद् भूत्वा प्रभाववृद्धिं समाधत्ते=वायुरनलमित्रं भूत्वाऽग्निपुरदाहादिना माहात्म्यं सुशिक्षते । ४ कृतामन्त्रणः । ५ आश्रवो=वचने स्थितः, अनाश्रवः=न आज्ञाकृत् । ६ संमुखगमनात् ।

विहारयुक्तं मुनिराजिराजितम् ।
तदन्तिके पातककर्मणोऽन्तिके
न के चिदानन्दविदस्तदानके ? ॥४१॥
स सात्त्विकस्तात्त्विकवर्गसंगत-
स्ततः क्षणात् क्षोणिपतिर्धृनीच्छया ।
चकार चर्चां[2] श्रमणाश्रमेऽश्रमः
स्वसंपदो वैश्रमणः स्वसंपदाम्[3] ॥४२॥
ततः समुत्थाय महाशयः शयं
निवेशयन् वज्रभृदर्पिते शये ।
प्रवालगागच्छगितं सुपुष्पया
ययौ वनं यौवनभृत् कृतावनम् ॥४३॥
वयोनिनादैर्[1]जयवादमादधत्
प्रवालवालव्यजनैः समीरयन् ।
निशम्य सम्यग् वनमेष पिप्रिये
हरिर्घनच्छायमिवार्णसां निधिम् ॥४४॥

---

१ तेषां पटहे । २ "चर्चा स्याद्धर्ममुद्रायां चिन्तास्थासक-योरपि" इत्यनेकार्थः, कथं 'मया एषा संपल्लब्धा, किं दत्त्वा, किं तपस्तप्तम् ?' इत्यादिका । ३ स्वं=धनम् ।

वनान्तपर्यन्तमुपेत्य सस्पृहं
सं[1]मेत्य त[2]च्छासनमन्यभूधनैः ।
पटालयाः शिश्रियिरे घटालयान्
पुरो दधानैर्बहुगन्धसिन्धुरान् ॥४५॥

परेऽप्यथामन्नचराश्वराचराः
क्रमेण तस्मिन्नवतीर्णदृक्पथे ।
विशश्रमुस्तच्छिबिरे विलम्बिनि
[3]भरावनारारवदुष्ट्रमालिनि ॥४६॥

मतङ्गजं वा[4]रिनिवारणं द्विधा
व्रजन्तमन्तःशिबिरं दिदृक्षताम् ।
न्यवर्त्ति दृष्टिप्रकरैः पुरौकसा-
मसां[5]द्रभावाध्वयुपामुपेयुषाम् ॥४७॥

प्रविश्य तत्तन्नगरे मसाधने-
र्धनैरुपादाय यथेष्टवास्तवम् ।
स्फुटं दिदीपे कटकं भटैर्जने-

१ प्राप्य । २ आज्ञाम् । ३ भरस्य अवनारणे आरवन्तो ये उष्ट्रास्तैः शोभिते । ४ वारिनिवारणं=सेनां प्रति व्रजन्तम्, पक्षे अरिनिवारणम् । ५ पलायनात् ।

रनुव्रजद्बन्धुसमाजबन्धुभिः ॥४८॥

ततः प्रसूनं च फले च मञ्जुले
निवेश्य देश्ये वनपालपुङ्गवे ।
नृनाथमभ्येभ्य रदाश्रयान्तरं
विनीयमानेऽत्र चरैर्मुदोऽभवन् ॥४९॥

कृतप्रसादो घनमालिनाऽवदत्
स सन्मुखस्थाङ्गुलिना जनाधिपः ।
निवेदिते पुष्पफलादिवस्तुनि
सुनिश्चलं तिष्ठ सुतुष्टचेतसा ॥५०॥

विदेशजैः पुष्पफलादि सादरं
मनःप्रसादाय विदायलिप्सया ।
निवेद्यमानं वनपालपाणिना
प्रपद्य भूपैर्मुमुदे पदे पदे ॥५१॥

विवेकिलोकैः कृतकेलिकर्मभि-
र्विलोक्य लोकंपृणतागुणे स्तुते ।
महाजनश्चारुसभाजनाश्रितो
व्यलोकयत् काननकामनीयकम् ॥५२॥

फलानि पुष्पाणि च पल्लवे करे
समं समादाय जने परस्परम् ।
प्रसर्पति प्रीतिमना महामना
अमन्यतास्मिन् समये स्वधन्यताम् ॥५३॥

न याऽजनिष्टाऽप्यनयाऽजनिष्टया
वयोऽतिपातोद्धतवातवेपिने ।
पुरा जने नीतिरियं पुरा धृता-
वयोऽनिपातोद्धतवातवेपिते ॥५४॥

नृणां क्रियाऽस्मिन् शिविरे पुरीप्रिया
क्रयादिकाऽभूदधिकाप्यनेकशः ।
स्थितैः समादाय महर्षिवार्धका-
नुगैर्जनैर्वस्तु विमिश्रिमये ततः ॥५५॥

यदत्र तन्त्रे विषयान्तरागते
स्वमज्जने तथ्यमकार्पुरुत्तमाः ।

१ आत्मनो धन्यताम । २ अनया पुरा इयं नीतिर्धृता । कया, अजनिष्टया=परमेश्वरकृतमर्यादारूपेण या नीतिः पुरा नाऽजनिष्ट=न जाता । कस्मिन्, वयोऽति० वृद्धे; तथा वयः=अवस्था तस्या अतिपातः=अतिशयस्तेन उद्धतं=नष्टं वातवेपितं यस्मात् तस्मिन् यूनि,-यद्वा, अप्रश्लेषात् अवयोऽनिपातोद्धतवातवेपिते ।

फलैः प्रसूनैर्बहुमानमादराद्
वने तदातिथ्यमशिक्षि शाखिभिः ॥५६॥
विनिद्रपत्रालिगनालिकैतवाद्
व्रजैरुतापीयत सोमजं नृणाम् ।
तदप्यभूदुन्मदसंपदेऽपदे-
ऽप्यहो महाविभ्रमकारणं धियाम् ॥५७॥
चतुर्दिगन्तेषु जयात् समाधनं
मृगाङ्कचूडामणिवर्जनार्जितम् ।
घनं विरेजे शिबिरे चयीकृतं
सुराचलस्पर्धनयाऽनयाश्रितम् ॥५८॥
प्रभोर्भयाद् वैरिकदम्बकं वकं
धिया गुरूकृत्य विलक्षमानने ।
दधानमाशासु चरिष्णु दुर्यशः

१ विकस्वरपत्रश्रेणिपूर्णा या अलिः=सुरा तस्याः कपटात् "अलिः सुरामधुलिहोः" इत्यनेकार्थः चन्द्रहासमद्यभ्रमात् सोमजं=दुग्धं पीतम् । २ सोमाज्ञानं विशेषेण भ्रमकारणं स्यात् "शीतकरश्चरस्तपस्वी च" इति ज्योतिर्विदः । मृगः अङ्कं यस्य मृगाङ्कः पञ्चमचक्री जिनः तं चूडामणौ वरयतीति क्विपि मृगाङ्कचूडामणिवर् स चासौ जिनः सेनान्यादिस्तेन अर्जितम् ।

पयोधिरोधः खलु संनिधौ दधौ ॥५९॥

वने चरन् सानुचरः पयोरुहां

परागभागैरिव पूजितोऽम्बरे।

जिनेश्वरः पञ्चमचक्रिपञ्चमः

स कौतुकी तत्र ददर्श केतकम् ॥६०॥

वियोगभाजां हृदि कण्टकैः कटुः

पटुः स्मरायोधनमाधने भटः।

त्वदीयपत्त्रं मदनेन दिग्जये

निधीयते तार्किकवादिनाऽऽदितः ॥६१॥

अलं दलं त्वं युगपज्जगज्जये

निधीयसे कर्णिशरः स्मरेण यत्।

ततः कृतं तत् करपत्त्रदारुणं

वियोगिनां हृद्दलनात् मनाऽन्वितम् ॥६२॥

यदा हनिष्यत्यमुना स्मरश्चरन्

प्रपद्य वैरं किमिति स्मरन् हरः।

ततो दुराकर्षतया [4]तदन्तकृद्

---

१ "पञ्चमो रुचिरे पक्षे" इत्यनेकार्थः। २ यथा तार्किकवादी आदितः पत्रं निदधाति। ३ 'दलम्' इति तव नाम अन्वितं=यथार्थमित्यर्थः। ४ तस्य स्मरस्य अन्तकृत्।

न्यवारयत् केतक ! चेतसा त्वकाम् ॥६३॥
दधामि पत्रं करपत्रकैतवात्
समार्दवत्वेऽपि जनार्दनोचितम् ।
कृनालिपानं तत एव सेवनाद्
विगीयसे मन्मथदेहदाहिना ॥६४॥
त्वदग्रसूच्या मच्चित्रन कामिनो-
र्मनोयुगं योजयते मनोभवः ।
भवेत्तदाश्लेषविशेषणे नयाद्
न शीतभीतिर्नववामसीव मा ॥६५॥
त्वयि प्रपन्ने तरुणस्य योषितां
मनोभवः सीव्यति दुर्यशःपटौ ।
प्रमह्य संकेतपदेऽपि केतनं
त्वमेव तत्केतकवागनिकेतनम् ॥६६॥
करेऽधिकुर्यात् तव पत्रमेव यो
धृतिः सपत्रा-कृतिमेति तस्य यत् ।

१ धृतिः=धैर्यं दुःखम् एति=कम्पनं चलतीति यावत् । यद्वा धृतिः=धैर्यं सपत्रा=सपक्षा=सवाहना। कृतिं=प्रयत्नम्=उद्यमं प्राप्नोति=चलनायोद्यतं भवतीत्यर्थः । वियोगकारिसंबन्धे=विशिष्टयोगवतां सङ्केऽपि, अपरस्य मोहो=मूर्च्छा अपगतः रमायाः=लक्ष्म्याः ऊहो=विमर्शः, यद्वा, परे=परमात्मनि मोहं कृतति वा ।

स्फुटं च पत्रैः करपत्रमूर्त्तिभि-

वियोगियोगे-परमोहकृत् त्वकम् ॥६७॥

फलं न मुस्वादु दलं मधूलिकं

तवास्ति वोपल्लव एव चादरः ।

विना फलं केतक ! केन पर्शुवद्

वियोगिहृद्दारुणि दारुणायसे ? ॥६८॥

धनुर्मधुस्विन्नकरोऽपि भीमजा-

प्रियं परागैरनुरागमन्वयन्

मनो हिनस्त्येव हि नास्तिरोभवन्

मनोभवः स्वाश्रयभित् कृशानुवत् ॥६९॥

मुनेर्मनोऽवामनकामनाशने

परं परागैस्तव धूलिहस्तयन् ।

स्मरः स्मरन् विश्वजयं शरैर्व्यधाद्

व्यथान्वितं धिग् मुनिघातपातकम् ॥७०॥

रतिप्रसक्तं तदसक्तमाशये-

ऽप्यसंशयं नः सकलं बलं बलात् ।

---

१ आपल्लव एव आदरः । २ अवामनः=सज्ञः ।

प्रसूनधन्वा शरसात् करोति मां
विमुच्य रुच्योपशमस्य चेतसि ॥७१॥
उदीर्य वीर्यादतिविप्रियं वशे
निधित्सता शान्तरसाख्यमानमम् ।
प्रपद्य वेलां समितेर्हृतारते-
रिति क्रुधाऽङ्कुरयन तेन कैतकम् ॥७२॥
विदर्भसुभ्रूस्तनतुङ्गतासये
तपस्यतोऽद्रीन् नृपतिर्व्यतिव्रजन् ।
ततः प्रयाणात् तदुपत्यकाश्रये
जहार तुङ्गत्वमदं पटालयैः ॥७३॥
प्रतिस्थलं तत्र गजान् समुन्मिल-
द्घटानिवापश्यदलं तपस्यतः ।
स्वकुम्भयोस्तत्कुचशोभयाऽभयं
तथैव धित्सून् शिरसा नमस्यतः ॥७४॥
विभुर्वनातिक्रमणे स चक्रभृत्
क्वचिद् घटान् वैक्षत संतपस्यतः ।

१ 'मा' इति मां विमुच्य=त्यक्त्वा चेतस्युपशमस्य रुच्या।
२ समितिः=युद्धम्, पक्षे यतिसमितिः । ३ वाशब्द इवार्थे ।

फलानि धूमस्य धयानधोमुखा-
न्कुचोपमाप्त्यै पथि दाडिमागमे ॥७५॥

कपालिनः[1] क्वापि कपालिपालिता-
सनास्थितानैक्ष्य तदाकृतेस्तुलाम् ।
अदीधरद्वीरतया फलान्विते
स दाडिमे दोहदधूपिनि द्रुमे ॥७६॥

वियोगिनीमैक्षत दाडिमीमसौ
तपस्तपन्तीं[2] बहुलातपे तपे ।
समुद्गिरन्तीं करुणाऽरुणास्रवं
पदं तदामेविभिरीहितं रसम् ॥७७॥

वनेचरीं कामपि तद्धटैर्धृतां
प्रियम्मृतेः स्पष्टमुदीतकण्टकाम् ।
भ्रमन्मृगाक्षीमचिरादमोचय-
ल्लतामिवायं गिरिजां रजोन्विताम् ॥७८॥

शिशूनपि स्वान् सममोचयद् नृपं
कृपाप्रपारूपमुपेत्य मत्यगीः ।

---

१ कपालिनः-संन्यासिविशेषान् ऐक्ष्य=दृष्ट्वा तदाकृते-स्तुलां=तुल्यतां दाडिमद्रुमेऽदीधरत् । २ तपस्तनीं ।

फलस्तनस्थानविदीर्णरागिहृ-
निदर्शनात् सा सृजती तदाशिषम् ॥७९॥
अभिक्रमे भीममुनां वियोजितां
श्रियाऽथ सस्मार सुराङ्गनाजितम् ।
नृपश्चलन् वीक्ष्य लतां फलान्तराद्
विशङ्कुकाम्यस्मरकिंशुकाशुगाम् ॥८०॥
स्मरार्धचन्द्रप्रतिमे कशीयमां
समापतत्पान्थनृणां कदम्बके ।
प्रभुः पलाशे तुलनामदीदृशद्
गलज्जगद्भ्रान्तपत्त्रसंकरे ॥८१॥
वियुक्ततापत्रघनैर्विनाशने
स्फुटं पलाशेऽध्वजुषां पलाशनात् ।

१ "अभिक्रमो रणे यानमभीतस्य रिपून् प्रति" ।
२ शुजं=समसंख्यतां सृक्का प्रवृत्तिर्विगुक् तादृशी लता=विस्तीर्णा आपत् तस्यास्त्रायन्ते इंदृग्धनैर्विनाशने सति; पलाशे पत्त्रत्वात्. वियुक्तता=पत्रियोगः, पत्राणि च, तता द्वन्द्वः. तद्रूपधनैः; प ... युक्तं=विरहः तस्य तापं त्रायते, यद्वा, विरहरूपा आपत् तां त्रायन्ते ईदृग्धनैर्विना अशनं=भोजने सत्यपि अध्वजुषां=मार्गसंचनाम ।

मुखेऽपि मालिन्यदशा ह्यमन्यता-
ऽमुनोचिता पातकचिन्तयाऽध्वनि ॥८२॥
स किंशुकः किंशुकवक्त्रतुल्यतां
धरेद्विपत्नीभवनादिति स्मरन् ।
सवृन्तमालोकत खण्डमन्वितं
विशङ्कमुद्यत्सुमनः सुवर्णरुक् ॥८३॥
क्वचित् पुनः शाल्मलिशालमालिनि
शिलोच्चये राजपथावरोधिनि ।
ददर्श भूपः सुमनोनिबन्धनं
वियोगिहृत्खण्डिनि कालखण्डजम् ॥८४॥
नवोलतागन्धवहेन चुम्बिता
जिनेशपादा युवराजनाभृता ।
समीयुषा स्वाङ्गभुवा प्रणेमुषा
गजाश्ववृन्देन समं समङ्गलम् ॥८५॥
प्रिया तदीया जननी नृपेण सा
करम्बिताङ्गी मकरन्दसीकरैः ।

---

१ बाल्यावस्थायां गन्धो लेशस्तं वहति न न्यूनेत्यर्थः, नञ्प्रतिरूपकेण 'न' इत्यव्ययेन समासः ।

समालिलिङ्गे शुचिवासरे रसं
प्रकाशयन्ती गिरिजेव तापमुक् ॥८६॥
लतेव तन्वी विभुविप्रयोगतः
प्रतापमेवादिशती नवोदयम् ।
दृशा नृपेण स्मितशोभिकुड्मला
भृशाऽक्कशारूढरतिर्न्यपीयत ॥८७॥
अदम्भसंरम्भविमुक्तमानसा
न सा प्रियं प्राप्य न विप्रिये प्रिया ।
नृपेण सर्वा प्रमदा मदालसा
दरादगम्यां दरकम्पिनी पपे ॥८८॥
विचिन्वतीः पान्थपतङ्गहिंसनै-
र्विना शुभान्यभ्रगताः प्रकाशिकाः ।
निशि व्यधुः स्वालयसंमुखोत्सुक-
प्रयाणयोगादपि दीपिका भटाः ॥८९॥
घटा गजानां मदसंकटैः कटै-
रपुण्यकर्माण्यलिकज्जलच्छलात् ।
निदर्शयन्ती बहुधागमोदित-

प्रभञ्जनान्ममवपुः सरस्यभूत् ॥९०॥
सहेत न क्वापि स हेमपुष्पकः
कलङ्कपङ्कं मधुपोज्झितस्ततः ।
व्यलोकयच्चम्पककोरकावली-
नृपः पथि क्वापि सुवर्णभास्वराः ॥९१॥
अहर्पतेर्दर्पभरात प्रसर्पति
प्रभाभरे भूमिभुजां महोदये ।
ददर्श ताराः पतनोन्मुखाः प्रगे
स-संवरारेर्बलिदीपिका इव ॥९२॥
अमन्यतासौ कुसुमेषु संभवं
जिनोऽपरागः स परागमाश्रयन् ।
दिशां जयाल्लोहितचन्दनेऽज्यया
कृतां रुचिं पद्मनिवासिपद्मया ॥९३॥
क्वचित् सरोऽन्तर्जलकेलिकर्मणि

१ अहर्पतेर्महोदये सति दर्पभराद् भूमिभुजां राज्ञां प्रभाभरे प्रसर्पति सति; यद्वा, अहर्पतेः प्रभाभरे भूमिभृतां=पर्वतानां महोदये प्रसर्पति सति । २ संवरारेः=कन्दर्पस्य; पक्षे सर्वं वस्तु संवृण्वन् ससंवरः=सर्वत्यागी अरिः=शत्रुः, तदा 'स' इति पदमध्याहार्यम् । रात्रिभागे दीपान् कृत्वा अनश्यत् ।

परागमन्धंकरणं वियोगिनाम् ।
तदप्यभूद् राज्ञि सुवर्णवर्णित-
तनूत्विषां नूनमनूनवृद्धये ॥९४॥
वनेचरेणापि वनेऽत्र पत्रिणि
फलाढ्यपुष्पैस्तदघानि तज्जनः ।
स्मरेण मुक्तेषु पुरा पुराग्ये
शरेषु लेभे विफला क्रिया यतः ॥९५॥
वने चरच्चारुचमूचराशुग-
स्थले बभौ पुष्परजोव्रजः क्वचित् ।
हृदि ज्वलत्काममहानलार्चिष-
स्तदङ्गभस्मेव शरेषु संगतम् ॥९६॥
पिकाद् वने शृण्वति भृङ्गहुङ्कृतैः
स्फुट भटानां वचनानुवादिभिः ।
जयारवोद्घोषणमेव चक्रिणो
जनोऽजैन्यस्तदमन्यताध्वगः ॥९७॥

---

१ वनेचरेण स्मरेण मैनिकः फलाढ्यपुष्पैः अघानि, केवलेषु शरेषु मुक्तेषु क्रिया विफला लेभे । फलमत्र शस्त्राग्ररूपम् अनेकार्थकोशे च प्रसिद्धम् । २ कामाग्नेर्भस्मेव । ३ अजन्येन=उत्पातेन रहितः ।

स्वसैनिकानां नृपतिः स्वमानसे
दशामुदश्वत्करुणो वियोगिनाम् ।
निधाय चाज्ञापयदागमं पुन-
र्निजावरोधस्य परस्परेच्छया ॥९८॥

नृपाज्ञयाऽऽमन्त्रितकामिनीजने
पुरस्तथान्वागमने मनस्विनाम् ।
अनास्थया सूनकरग्रमार्गणीं
स्त्रियं श्रमेणानुनिनाय कश्चन ॥९९॥

चलन् नृपादेशनिवेशपेशलः
पुरः स्वसेनान्वयनो नृणां गुणैः ।
स्वगेहमाप्यापि वियोगिनीं प्रियां
ददर्श दूनः स्थलपद्मिनीं नलः ॥१००॥

रसालमालः ससदृश्यनाऽमुना
स्वदेशजन्मा वसुधातपत्रितः ।
सृजन् दलैस्तोरणधारणीं चलैः
फलैः पुनर्न्युञ्छनकर्म शर्मणे ॥१०१॥

१ स्थलपद्मिनीव स्थलपद्मिनी, लुप्तोपमा । २ गुणैः कृत्वा नरः=अर्जुनः कृष्णो वा; यद्वा, नल इव नलः, इयमपि लुप्तोपमैव ।

जगर्ज गेर्जेषु मणिर्मदोत्कटः
स्फुरद्‌द्विरेफारवरोषहुंकृतिः ।
स्पृशंश्च सत्तावयवैर्भुवं जयै-
र्दिशां गजानामिव साङ्गजाश्रियाम् ॥१०२॥
समुच्छ्रिते चाम्रतरौ समीपगे
ध्वजे महेन्द्रस्य चलोच्चकेतनैः ।
समीरलोलैर्मुकुलैर्वियोगिने-
हितः स्वलोकाय सुखाकरोद् नृपः ॥१०३॥
वियत्युदीयाय जिनेशचक्रिणः
सदानुयानादिव चक्रकेतवान् ।
अनीतिनिष्ठाय नु चक्रबान्धवो
जनाय दित्सन्निव तर्जनीभियम् ॥१०४॥
दिने दिने त्वं तनुगेधि रेऽधिकं
मणे ! करस्पर्शनो ममेति सः ।
निजातपत्राय जगत्त्रयीविभु-

१ गर्जेषु=गजेषु मणिः=रत्नमित्यर्थः । २ दिक्करिणां विजयैः । ३ अङ्गलक्ष्म्या सहितानाम् । ४ स्वदेशलोकेन बहुकालं वियोगिना ईहितः=वाञ्छितः । ५ सूर्यः ।

नृणां विपन्नाय[1] ददौ प्रभाभरम्[2] ॥१०५॥
कृपाणरत्नं[3] कृपणे कृपाधनं
पुनः पुनर्मूर्च्छ च तापमृच्छ च।
द्विषे मिषेण स्वकराकरस्य य-
दितीव नित्यं समुपादिशत्प्रभोः ॥१०६॥
धृतं पदं वार्धकिरत्नयत्नतो
मृषाऽकरोद् भूरिकृतोपभोगदम्[4]।
इतीव[5] पान्थं शपतः पिकान् द्विजान्
क्व यासि हित्वा वनितानितान्तमुक् ॥१०७॥
यथेष्टदानेन विशिष्टशिष्टधीः
स्वसैन्यजन्ये शिबिरे प्रपापदे[6]।

---

१ विपदमन्नायत इति विपन्नं तस्मै। २ स्वोपरिध्यर्षेण छन्नाय प्रभादानं, स्वप्रभाया आधिक्यात्। ३ कृपाणरत्नं कृपणे=दीने कृपाधनं=कृपामयम्: द्विषे=रिपवे त्वं मूर्च्छां तापं वा ऋच्छ=प्राप्नुहि, इत्युपादिदेशेव। ४ किं० पदं, भूरिगा=स्वर्णेन कृता ये उपभोगास्तेषां दायकम्। ५ 'हे पान्थ! त्वं वनितानितान्तमुक् क्व यासि?' इति पान्थं शपतः पिकान् वा द्विजान्=गमनवारकदैवज्ञांश्च वार्धकिकृतं पदं=स्थानं मृषाऽकरोत्; किमर्थं वारणं क्रियते, स्थानलोभादेव न यास्यन्तीति भावः। ६ सः=राजा शिबिरं प्रपायाः स्थाने पथिकान् कयापि रीत्या दैन्यतः सखेदं यथा स्यात्तथा लोहितेक्षणान् न पेक्षिष्ट।

कयापि रीत्या पथिकान्न दैन्यतः
सखेदमाक्षिष्ट स लोहितेक्षणान् ॥१०८॥
अलिस्रजा कुड्मलमुच्चशेखरं
निरीक्ष्य मेने ह्यमुनाऽपि चक्रिणा ।
द्रुमेऽपि दानातिशयः फलोदय-
श्रिये पुनः किं पुरुषे सचेतसि ? ॥१०९॥
अलिस्रजा कुड्मलमुच्चशेखरं
श्रिया जयच्चर्म मणिं नृणां मणिः ।
दधार धाराधरधारणे रणे
क्षमं गुरु द्वादशयोजनप्रमम् ॥
वनं घनच्छायमिहाग्रतोऽग्रहीद्
निपीय चाम्पेयमधीग्यया धिया ।
मणिः पुरोधा अवरोधमङ्गतं
स्वकान्तकान्तागमनात् स्मरं गतः ॥११०॥
अखण्डदण्डं महिमाऽभिपिण्डितं
सुवर्णवर्णांशुककेतुमण्डितम् ।

१ धाराधरो=मेघः कृपाणश्च: कृपाणस्य धारणं यस्मिन् रणे; अथवा रणे मेघस्य धारणे समर्थं चर्ममणिं दधार ।

स धूमकेतुं त्रिपदे त्रियोगिना-
मजीगणद् नाशयितुं गणं द्विषाम् ॥१११॥
ह्रदः पयोधेः स गभीरताभृतः
समुच्छलत्स्वच्छमहामहोमणिम् ।
स्वतेजसां बीजमिव द्युतिं नय-
दुर्दीनमानद्धितवानशङ्कित ॥११२॥
गलत्परागं भ्रमितभृङ्गिभिः पत-
द्भूतालिदम्भिकरणेऽब्जमावहन् ।
स काकिणीरत्नसयत्नपाणिना
रराज राजन्यजयी कृपाणिना ॥११३॥
नृपेण चक्रे ह्यवनीवनी पुरं
प्रसक्तभृङ्गावलिनागकेसरम् ।

१ हृदयमसमुद्रान् उद्धृतं=उत्थितम् । २ आनद्धितं=मरुजध्वनितं अस्यास्तीति नित्ययोगे मतुप् "आनद्धो मुरजे शङ्कायां संतापे मरुजध्वनौ" इत्यनेकार्थः । ३ स=राजा रराज । किं कुर्वन्, काकिणीरत्ने सयत्नो यः पाणिस्तेन कमलं दधत् । किं० अब्जम्, गलत्परागम् : पूर्वं पतन्तः पश्चाद् भूता ये अलयो=भृङ्गास्तत्परिकरणे । ४ नृपेण अवन्यां=भूमौ या वनी=वनराजी सा पुरं चक्रे । प्रसक्तेति० प्रसक्तानि भृङ्गावलिनागकेसराणि यत्र तत् । भृङ्गादयः ओषधिविशेषाः ।

व्यधायि तस्मिन्नभिषेचनान्नृपै-
  र्महोत्सवो द्वादशवार्षिकोऽन्वहम् ॥११४॥
जने वधूनां लसदञ्जने दृशि
  परस्परेणाभिनये तदुत्सवे ।
स भारनाराचनिघर्षणस्खल-
  त्कृतारणैराभरणैरमन्यत ॥११५॥
न वीतरागस्य रतौ नवाऽरता-
  वनामनस्यं मन एव तज्जनः ।
अवीतरागस्य तु वीतरागता-
  ज्वलत्कणं शाणमिव व्यलोकयत् ॥११६॥
कृपालयं पालयतोऽर्हदीशितु-
  रवामनं वा मननेन तन्मनः ।

१ आमनस्यं=प्रगाढं दुःखम् । २ "यानमङ्कुशवारणम् । निषादिनां पादकर्म यतं वीतं तु तद्द्वयम्" (अ० चि० ४, २९७) । ३ "वीतं फल्गुहयद्विपम्" (अ० चि० ४, ३१८) तत्र रागभावरूप एव ज्वलन्=दीप्यमानः कणो=अंशो यत्र तत् । वीना रागभावरूपा ज्वलन्कणा यस्माद् वा । "कणो धान्यांशलेशयोः" "शाणः कषे मानभेदे" इत्यनेकार्थः । ४ अवामनं=पटुतरम्, वान्तिरहितं वा । ५ ज्ञानेन ।

[1]जगत्परं पौरजनो [2]जगद्भुजि-
ज्वलत्कणं [3]शाणमिव व्यलोकयत् ॥
गच्छाधीश्वरहीरहीरविजया-
म्नाये निकाये धियां
भृत्यः श्रीविजयप्रभाख्यसुगुरोः
श्रीमत्तपाख्ये गणे ।
शिष्यः प्राज्ञमणेः कृपादिविजय-
स्याशास्यमानाग्रणी-
श्चक्रे वाचकनाममेघविजयः
शस्यां समस्यामिमाम् ॥११७॥

इति श्रीनैषधीयमहाकाव्यसमस्यायां महोपाध्यायश्रीमेघविजयगणि-
पूरितायां तृतीयः सर्गः संपूर्णः ॥ श्रीः ॥

१ जगत् पालयतः । २ जगतो भुजिर्भोजनं तत्र ज्वलन्तः कणा यस्मिन्, बहुभोजने बहुपाक एव वरमिति । ३ पौरजनः अर्हन्मनः साणं=सशब्दमिव ददर्श, पुनः पुनर्भोजनादेशात् । ४ नैषधीय० ६२ श्लोकः ।

## ॥ अथ चतुर्थः सर्गः ॥

---

तदङ्गमुद्दिश्य सुगन्धिपातुका
महौषधिप्राभरमा रमाधिकाः ।
अपः प्रपद्याम्बुनिधेरधैर्यता-
ऽजनिष्ट मृष्टाऽन्यपयोनिधेर्भिया ॥१॥

कृतेऽभिषेके नृपरूपभादृशः
शिलीमुखालीः कुसुमाद् गुणस्पृशः ।
स्त्रियः समुद्दिश्य मनोभवोऽमुचन्
समं रसावेशवशां दशां गताः ॥२॥

कुतूहलेऽस्मिन् जनराजिसंकुले
मिलच्चलाक्षीजनलक्षवीक्षणात् ।
स्वचापदुर्निर्गमनमार्गजभ्रमाद्
न कस्य हास्याय भटा विलक्षिताः ? ॥३॥

सुराङ्गनाः स्वामिगुणाङ्गनाटने

---

१ चक्रिणोऽभिषेके अपः=पानीयानि प्रपद्य=आश्रित्य समुद्रस्य अधैर्यता अजनिष्ट मृष्टः पयोनिधिरन्योऽभूदिति भिया ।

स्वरागभागात् कृतशूरपूरणे ।
निजप्रियां मौनरुचिं रतिं स्मरन्
स्मरः स्वनन्तीरवलोक्य लज्जितः ॥४॥
मरुल्लतापल्लवकण्टकैः क्षतं
वनेषु पात्रं न पुनर्जनेषु तत् ।
जिने दिनेशेऽभ्युदितेऽवरोधनं
वधूजनेष्वेव न पूजने मनाक् ॥५॥
जिनेऽभिषिक्तेऽनुपदं तदङ्गने
समुच्छ्वसच्चन्दनमारमारभम् ।
वनं बभूवाऽऽगतदृग्गुणप्रम-
सहस्रदेशेशकृतैर्महोत्सवैः ॥६॥
विशुद्धमुक्ताभरणाद् गुणान्वितं

१ "रतौ मौनम्" इति नीतिशास्त्रम् । २ "पात्रं तु कूलयोर्मध्ये पर्णे नृपतिमन्त्रिणि । योग्यभाजनयोर्यज्ञभाण्डे नाट्यानुकर्तरि" इत्यनेकार्थः । ३ पात्रम् । ४ पूजायाम् । ५ दृक्शब्देन द्वयं, गुणास्त्रयः, एवं द्वात्रिंशन्महस्रराजभिः । ६ पक्षे विभिः=पक्षिभिः शुद्धं=शोधितम् ; पक्षे मुक्ता=त्यक्ता आभा यत्र ईदृशाद् रणात्= संग्रामात् । ७ गुणः=मौर्वी तदन्वितम् ।

सदोन्नतं कामममलीनताश्रयम् ।
स वारनारीकुचमंचितोपमं
शमेन मेने प्रभुनापदं प्रभुः ॥७॥
यतः प्रिया सा-नु-मति-क्रियोचिता
धृताऽमुना पीतरसानुगामिनी ।
पुरो निधायेति जनोऽत्र चक्रिणं
ददर्श मालूरफलं पचेलिमम् ॥८॥
युवद्वयीचित्तनिमज्जनोचितं
स्थलं बभूवोत्सवतः सरःसमम् ।
समुच्छलत्तुङ्गतरङ्गवीचिभि-
र्मरुत्प्रयुक्ताम्बुकणाभमौक्तिकैः ॥९॥
जिनेशभीतस्मरपाणितः पत-

१ उन्नतं=साहंकारम् । २ कुचौ मलीनताश्रयौ, चूचुके श्यामत्वात्; पक्षे कामः=स्मरः, लोभो वा तस्य मलीनताश्रयं; यद्वा, कामम=अत्यर्थम्, अलीनताश्रयं=क्वापि न लीनम्=चञ्चलमिति यावत् । ३ यस्मात् मालूरफलात् । ४ साऽनुमतिशीले प्रिया क्रिया=क्रीडादिः अमुना राज्ञा धृता; पक्षे नु=वितर्के, सा=प्रसिद्धा उचिता मतिक्रिया=बुद्धिकार्यं राज्ञां वर्धन-विद्यावदानादि धृता; तृतीयपक्षे प्रिया=प्रेमी अनुमतिक्रियया सहिताऽनुगामिनी सार्थं धृता । ५ मालूरः=श्रीफलः ।

रप्रसूनशून्येतरगर्भगह्वरम् ।
वनं तदुच्चैर्भवनं मभावनं
दिशो दशामोदभरैरपूपुषत् ॥१०॥
हरेण वैरे कविना व्यनीयत
मिसृक्षया तद्विजयैषिणाऽङ्गजः ।
स्मरेषुधीकृत्य धियाऽभयाश्रया:
पदौ प्रभोराश्रय तज्जयाश्रियः ॥११॥
पुरीव पूर्वापणरत्नबिम्बितं
प्रतीच्यभागस्थितमर्जुनान्वितम् ।
वणिग्मणिर्वीक्ष्य हृतार्थशङ्कया
स पाटलायाः स्तवकं प्रकम्पितः ॥१२॥
मुनिद्रुमः कोरकितः सितद्युति-
स्तदुत्सवेऽभ्यागतकामिनीमुखैः ।

१ हे स्मर ! त्वं प्रभोः पादौ इषुधीकृत्य=इषवः=बाणाः अ-
धिकारात् प्रसूनानि ते धीयन्तेऽस्मिन्निति इषुधिस्तं कृत्वा आश्र-
य=सेवस्व=कुसुमार्पणादिना पूजयेत्यर्थः, इति कविना
अङ्गजः व्यनीयत=शिक्षां प्रापितः, सिसृक्षया=जगतो निर्माणेच्छ-
या । किं० कविना, तस्य स्मरस्य विजयैषिणा । किंवि० जय
श्रियः, अभयम् आ=समन्तात् धयन्तीति अभयाधयाः ।

स्फुरद्विभूषाङ्गमयूखमंमुखै-
र्वनेऽपि मेने सुमनोभिरन्वहम् ॥१३॥
उपायनैः श्याममणीर्गिरिर्जनै-
र्वनेऽमुनाऽमन्यत सिंहिकासुतः ।
विलोक्य कान्तामिह राजमण्डलीं
स्वमार्गभेदानुगमात् सचेतसा ॥१४॥
बभौ तदा रात्रिपदेऽप्यहः सुकृ-
न्महो द्विधाप्याहवनैर्हविर्भुजाम् ।
तमिस्रपक्षं त्रुटिकूटभक्षिनं
तमेव धूमभ्रमतोऽपि दूरयत् ॥१५॥
नरः क्षणे कुत्रचिदेव पुत्रिका-
कदम्बकं विभ्रमभाविताम्बकम् ।
ददर्श लोकः स्वयमेव नर्त्तने
कलाकलापं किल वैधवं वमन् ॥१६॥

१ पण्डितेन । २ नाशकपटेन भञ्जनम् । ३ तमेव तमिस्रपक्ष=तमोभरं पक्षशब्देन बलम् अनेकार्थे । ४ "विधुश्चन्द्रेऽच्युते वाङ्गनायां विटपेऽपि च" इत्यनेकार्थः, ततो वैधवं=अच्युतसंबन्धिनम् ।

अथ प्रवृत्ते स महे महाशयः
पणाङ्गनास्ता नररूपधारिणः ।
पुरप्रवेशे नटयन् ययौ स्वयं
कलाकलापं किल वैधवं वमन् ॥

पुगे हठात् क्षिप्ततुषारपाण्डुर-
च्छदावृतं गोपुरमस्य चाक्रिणः ।
प्रवेशयोगेऽप्यरुचत् सतोरणं
रणद्द्विपाश्वेन समं [1]समन्ततः ॥१७॥

अवाकिरंस्तं सुदृशोऽथ मौक्तिकै-
श्छदावृतैर्वीरुधि बद्धविभ्रमाः ।
पदे पदे पौरगिरा 'जय प्रभो'-
ऽप्युदीरयन्त्यः प्रमदात् तदाशिषः ॥१८॥

चतुष्पथे जग्मुषि राजराजिभि-
र्विभाविभाश्वोदितरेणवो नृणाम् ।
मिलन्निमीलं सम्रृजुर्विलोकिता
न चक्षुरक्षुब्धममक्षवीक्षणात् ॥१९॥

---

१ समन्ततः=चतुर्दिक्षु ।

पुरन्दरेणापि समीयुषा सुरैः
प्रतिष्ठितास्तुष्टिपरेण वृष्टिभिः ।
स्वकेतनैश्छादयता प्रणेमुषा
नभस्वतस्तं कुसुमेषु केलयः ॥२०॥

गता यदुत्सङ्गतले विशालतां
तनूजपौत्रानुजपुत्रतत्सुताः ।
अलंकृताश्चेभकृताधिरोहणाः
पुरस्सरा रेजुरदःप्रमत्तये ॥२१॥

नमन्ति नूनं विनयेन मेदिनीं
द्रुमाः शिरोभिः फलगौरवेण ताम् ।
नृपोऽप्यतोऽन्तःपुरमाप्य सो नतो-
ऽचिरात् सवित्रीमचिरां चिरागतः ॥२२॥

सलाजराजन्नवमौक्तिकोक्तिका-
शिषां प्रसारैरवरोधमंगताम् ।
कथं न धात्रीमतिमात्रनामितैः
स नाभ्यनन्दद् विभवैः सनाऽमितैः? ॥२३॥

सभाजनाधीननिलीनचेतसः

सभाजनान् वीक्ष्य विशेषतस्त्रिधा ।
यथार्हमानेन समं विसर्जनैः
स वन्दमानानभिनन्दति स्म तान् ॥२४॥

नृपाय तस्मै हिमितं वनानिलै-
स्तपेऽपि धाराधरयन्त्रवेश्मनि ।
ययावहोरात्रकदम्बकं सुखं
स्वराजधान्यां सततोद्योन्मुखम् ॥२५॥

असौरभेऽप्यत्र ससौरभीभवत्
सुधीकृतं पुष्पसंग्रहैर्महः ।
असौ ससौख्यं समये शुचेरपि
विभासमानो मनसाऽप्यमन्यत ॥२६॥

तपात्ययं नन्दति तद्दिनं घने-
र्घनाघनैः श्यामलिते नभस्यपि ।
विनिर्मितं कनकरेणुभिः सितं

---

१ विसर्जनैः=दानैः । २ सुखयतीति पचाद्यच् । ३ सुरभिः=वसन्तः तस्य भावः सौरभं तदभावेऽपि । ४ शुचेः=आषाढस्य, पक्षे शुचेः=सूर्यादपि विभासमानः=विभया असमानः=अतुल्यः ।

स्वतेजसा वाऽनुबभूव सस्मितम् ॥२७॥
यथेष्टकार्यस्य स सर्जनाज्जने
सनिर्भरं निर्भयमंक्थे पथे ।
सदैव राजा प्रिययोगिनेऽङ्गिने
वियोगिनेऽदत्त न कौमुदीमुदः ॥२८॥
अयोगभाजोऽपि नृपस्य पश्यता
यथेष्टदानं स्वजनेन मन्त्रणे ।
कृतेऽफलत्कामनया द्युरत्नवत्
स्वसिद्धिदे स्वामिनि नाद्भुताय तत् ॥२९॥
क्वचिज्जलक्रीडनकेऽपि भूभुज-
स्तदेव साक्षादमृतांशुमाननम् ।
निरीक्ष्य युक्ताम्बुजशङ्कयाऽरजा
उपेयुषी राजमरालमण्डली ॥३०॥
क्वचित्तथाऽमौ मतिशालिमालयो-

१ 'वा' उपमाने । २ पथशब्दोऽकारान्तोऽपि बृहद्वृत्तौ । ३ विशिष्टयोगिने कौमुदीमुदो न अदत्त, इति काकूक्तिः यद्वा, विरुद्धयोगिने कौमुदीमुदः न अदत्त, नीतिकरत्वात् । ४ इच्छया । ५ स्वस्य=धनस्य सिद्धिदे, वा=अथवा स्वस्य आत्मनः मोक्षदे । ६ अमृतांशुं=आम्रज्योतिः । ७ अरजा=निर्मला ।

पवीणितस्तत्क्कणनैपुणे गुणे ।
पिकेन रोषारुणचक्षुषा मुहुः
कृताप्यवज्ञा विफला यथाऽभवत् ॥३१॥
दिदृक्षया चन्द्रमसो वनेऽर्हता
न्यपेध्यतेशेन पिकस्वरोऽमुना ।
यतो मृगाङ्कत्वसुहृद्धियो रिपुः
कुहूरुताहूयत चन्द्रवैरिणी ॥३२॥
अशोकमर्थान्वितनामताशया
स्वकानने तं निदधे स तन्मये ।
अनुक्रमेणाभ्युचिते ह्यनु क्रमात्
स केवले बोधबले यतोऽनुगः ॥३३॥
पुरारिरूपेऽस्य पुरारिरूपिणो
गताञ्शरण्यं गृहशोचिनोऽध्वगान् ।
चकार चक्री विषयैः प्रतिष्ठिना-

१ परिपाट्या । २ "क्रमः कल्पोंह्रिशक्तिषु परिपाट्याम्" इत्यनेकार्थः क्रमात्=कल्पात्=आचारात् अनु=पश्चात् । ३ पूर्वमस्य दिक्साधने अरिरूपिणस्तान शरण्यं गतान् सेवकीभूतान् विषयैः=देशैः, भोगैर्वा प्रतिष्ठितांश्चकार ।

नशल्यवात्मल्यमतिर्महत्यहो ! ॥३४॥
अमन्यनावन्तमिवैष पल्लवैः
स्वरागयुक्तैः सुरमालमङ्गिनः ।
हितं गिरन्तं त्रिजगद्गुरुं जनो
जिनं विमुक्तः प्रभुशोभया भयात् ॥३५॥
स्वतः प्रशान्तं शतशो मृगीदृशां
निशान्तमाप्तं द्विविधं क्षमाधनम् ।
स्वरूपनिष्ठं वशमाननिष्ट न
प्रतीष्टकामज्वलदस्त्रजालकम् ॥३६॥
विलासवापीनटवीचिवादना-
दनाविशन्मानसमेनमेनमि ।
रमेन लीलासु मनस्विनीजन-
श्चकार नोद्भूतविकारकारणम् ॥३७॥
मनो मनोभूवशवर्त्ति नाऽभवत्

---

१ जिनं सुरसालं=कल्पतरुं जनोऽमन्यत पल्लवैर्वाक्यैः प्राणिनः अवन्तम् । २ भयाद् विमुक्तः । ३ स्वयं संबुद्धत्वाद् न गुरूपदेशतः प्रशान्तं=कामाद् निवृत्तम् । निशान्तं=गृहं रात्रिसीमानं वा । क्षमाधनं- राजानं शमिनं वा । ४ कामशस्त्रजालकं वशं न अतनिष्ट ।

पिकालिगीतैः शिखिलास्यलाघवात् ।
सरोरुहामोदविनोदतोऽप्यहो
महोदयार्थेऽस्य निलीनतावशात् ॥३८॥
यथाऽऽलये तालविशालयन्त्रज-
ध्वनिश्च गान्धर्वविशेषनर्त्तनात् ।
वनेऽपि तौर्यत्रिकमाग्गाध तं
तथामृदङ्गोदितवेणुवादनात् ॥३९॥
अलीनचेता विषयोप[1]भोगवान्
न-दीनवृत्त्याऽतिगभीरधीरधीः ।
अरीरमत् मारसना[2]न्विताऽलिभिः
क्व भोगमाप्नोति न भाग्यभाग् जनः ? ॥४०॥
तदर्थमध्याप्य जनेन तद्वने
पटूकृता[3] वा भवनेऽपि मागधाः[4] ।
तमभ्यनन्दन्नवभावभावनैः

१ विषयः=शब्दादिर्देशो वा । २ मा रसना कटिमेखला तन्महिता आलयः=स्त्रियाः सख्यः नाभिः, पक्षे मारसनं कवच-विशेषस्तद्युक्तानां श्रेणीभिः । "आली सख्यावलीसेत्वमर्थेषु विशदाशये" इत्यनेकार्थः । ३ पण्डिताः कृताः । ४ बन्दिनः ।

स्वकाव्यभाव्यन्वयराञ्जनं जिनम् ॥४१॥

वनेचरैः सार्धमुपात्तकिंशुकाः
शुका विमुक्ताः पटवस्तमस्तुवन् ।
तथा यशोभिर्विशदीकृताशयै-
र्यथा प्रशस्याः मकृपैर्नृपैरपि ॥४२॥

विभोः स्वशीलश्रुतिशालितालिभिः[1]
समं निवृत्ताः सुरतेऽभिसारिकाः ।
स्वगामृतेनोपजगुश्च सारिका
गृहे गृहे तच्चरितस्य कारिकाः[2] ॥४३॥

सुरानुवृत्त्याऽप्सरसो रसोर्मिभि-
स्तरङ्गिताङ्ग्यः प्रभुवृत्तनर्त्तने ।
विभावयन्ति स्म सुविस्मयं हरे-
स्तथैव तत्पौरुषगायनीकृताः ॥४४॥

इतीष्टगन्धाढ्यमटन्नसौ वनं
वधूतमाधूतमनाः स्वयौवनम् ।
त्रिवर्गसंसर्गनिसर्गसाधुधीः

---

१ विभोः शीलश्रुत्या शालिनाः शोभिता या आलयस्ताभि समम् । २ कारिकाः=श्लोकविशेषाः ।

पुपोष निर्दोषतयैव देवनैः ॥४५॥

निधीयमानो हृदये सुरीजनैः
पिकोपगीतोऽपि शुकैः स्तुतोऽपि च ।
दिदृक्षितः कुण्डलिकामिनीमनो-
रथैरथैष प्रभुराप विष्णुताम् ॥४६॥

सुधाभुजामप्यतिशायिशासनाद्
निषेवितोऽयं वसुधाभुजां गणैः ।
अविन्दताऽऽमोदभरं बहिश्चरं
परं तमध्यात्मभरं दधौ चिरम् ॥४७॥

प्रियत्वमास्थाय च भीमभूमनो-
विनोदसिद्ध्यै विषयेष्वरज्यत ।
धियाऽमुनाऽमानि सुखं भवेऽभव-
द्विदर्भसुभ्रूविरहेण नान्तरम् ॥४८॥

करेण मीनं निजकेतनं दधत्
स्मरः स्वरूपोपमया तमाश्रयत् ।
ततो रिरंसुः सुहृदा यदृच्छया

१. देवनैः=रमणैः । २ न भवत् विदर्भसुभ्रूविरहो यस्य तेन ।

वने दिदीपे स मधुर्मधुव्रतैः ॥४९॥
पवित्रितोऽमावृपिकुल्यया लयाद्
द्रुमालवालाम्बुनिवेशशङ्कया ।
सुसौरभासानु-गतोऽथ तापसे
द्विधापि संतापननापमादधौ ॥५०॥
मधुव्रतज्याजुषि पुष्पकार्मुके
निधीयमानेऽथ खगे युगेषुणा ।
व्यतर्कि सर्वर्तुवनं घनं मधुं
सहायमाधाय कृता हतिर्नृणाम् ॥५१॥
खगे द्विधा रागिणि पद्मिनीगणे
स्फुटे करस्पर्शनजाङ्गजज्वरे ।
स्वलोकसाम्राज्यममंस्त निर्भयं
स मित्रमत्रानुसरन्निव स्मरः ॥५२॥
लताबलालास्यकलागुरुस्तरुः

---

१ सुष्ठु सूरस्य भासा अनुगतः, पक्षे सुष्ठु वसन्तभावेन सासानु=शिखरं मर्यादीकृत्य गतः=प्राप्तः । २ द्विधापि=अन्तः कामरूपं, बहिः सूर्यतापरूपं च । ३ मित्रं सूर्यं वा सतेजसं अनुसरन् स्वयमपि तथा भवन् । ४ तरुः रणाद् न शमी अभवत् ।

शमी रणाद् न ह्यभवत् समीरणात् ।
स [2]किङ्किरातोऽपि किरातजातवद्
भियेऽध्वगानां सपलाशवासनः ॥५३॥
रजो दधानामपि मल्लिवल्लिकां
प्रसूनगन्धोत्करपश्यतोहरः ।
जहौ न दूरे मधुपोऽ[3]न्धसाऽऽदरा-
दहोऽलिमत्ते समये [4]न चेतना ॥५४॥
स्फुटार्त्तवाङ्का धृतकामधीर्गजं
प्रभिन्नगण्डं तदचण्डगर्जितम् ।
असेवतामुं मधुगन्धवारिणि
ह्रदे मदेनोच्चकरे करेणुका ॥५५॥
द्विधा बलं प्राप्य च सौरभास्थिते-
रनूनसूनस्पृगमेत्यनाङ्गिभिः ।
सरिद्वरात्यक्तनिषद्वराम्भसि
प्रणीतलीलाप्लवनो वनानिलः ॥५६॥

१ समीरणात्=वायोः । २ किङ्किरातः=कोरण्टकः पलाशवासनायुक्तः भियेऽभूत् । पलाशं=पत्रं रक्तमस्य । ३ अन्धसा=भोजनेन आदरात् । ४ न विवेकः ।

अथ स्वमादाय भयेन मन्थनात्
तडागभागव्यपदेशलेशतः ।
पुरोपकण्ठे शरणागतं प्रभुः
कदाचिदम्भोधिमिह व्यलोकयत् ॥५७॥

जडात्मकत्वादुपभोग्यताच्युतं
चिरत्नरत्नाधिकमुत्थितं त्विगत् ।
दधत् त्वधः स्वं विभवं स चक्रिणा-
ऽप्युपाललम्भे कृपणक्रियाश्रिया ॥५८॥

वदान्यलोकेन कृताः प्रपास्त्रपां
कथं न धत्से रसभृत् समीक्ष्य ताः ।
निलीय तस्मिान्नित्रमन्नपांनिधि-
र्भवानतस्त्वां मकराकराऽस्तु धिक् ॥५९॥

इतीव मन्ये भगवद्गवीरसात्
सितोपदेशां स सुधां सुधारयन् ।
विशिष्य पुष्यन् वसुधां रसागमै-
र्वने तडागो ददृशेऽवनीभुजा ॥६०॥

पयोनिलीनाऽभ्रमुक्तामुक्तावली-

बलीयसां राजिरमुष्य दन्तिनाम् ।
पिपासुराक्रान्तिपदाद् दिवा दिवा
पुरस्य साम्यं सरसोऽब्धिनाऽवदत् ॥६१॥
जलान्तमाद्धिन्नमदान्धमिन्धुर-
रदाननं तोरगपुच्छमच्छवीन् ।
निरीक्ष्य मेने नगरीं नु भोगिनां
समापतन्तीं जिनसेवया जनः ॥६२॥
जिनेशितुर्दर्शनलालसाऽलसा
भुजङ्गकन्या ह्यमितोन्मुखश्रियः ।
जलार्धरुद्धस्य तटान्तभूभिदः
पदात् पयोजन्मवनस्य रेजिरे ॥६३॥
वशीकृते तत्मरमाप्मरोजने-
ऽवतारमाप प्रतिबिम्बितोडुभिः ।
सरोरुहे सौरभचौरबन्धनं
मृणालजालस्य मिषाद् बभार यः ॥६४॥
तटान्तविश्रान्ततुरङ्गमच्छटा-

१ दिवा स्वगण ।

स्तटाक एष प्रतिबिम्बितैर्दधौ ।
अमन्दनन्दीमरमां जिगीषया
चलाचलोत्तुङ्गतरङ्गसंगमैः ॥६५॥
पिनाकिनाकिप्रभुगजराजिभिः
समं तटस्थे क्षितिपे पटालये ।
स्फुटानुबिम्बोदयचुम्बनेन यः
स्फुटीचकाराप्सरसां प्रभोः सभाम् ॥६६॥
जलान्तरुन्मज्जदनेककामिनी-
मनोऽनुषङ्गात् तरलैरिवामलैः ।
बभौ चलद्वीचिकश स्तशान्तनं-
हयानुबिम्बैरविलम्बमेव सः ॥६७॥
तमेकमुच्चैःश्रवसं बिडौजसे
प्रकाशयन्तं मथितेऽपि चाशये ।
जिगाय वार्धिं तुरगानुबिम्बितैः
सहस्रमुच्चैःश्रवसामिव श्रयन् ॥६८॥
सिताम्बुजानां निवहस्य यश्छलात्

१ अप्सरसां प्रभोः=इन्द्रस्य सभाम् ।

पयोनिधेः पारगतं यशोभरम् ।
न्यवेदयन् पारगतस्य किंनरैः
प्रगीयमानं लसदङ्गमानसैः ॥६९॥

सरोरुहां तत्र च खण्डमण्डनं
बभावलिश्यामलितोदरश्रियाम् ।
स्वनाथदर्शिक्षणिकाभिराभिमुखं
विकस्वरेन्दीवरचारुनेत्रभृत् ॥७०॥

सकर्णिकं तत्र लसद्वधूमुखं
सपत्रलेखं कृतपद्मसौहृदम् ।
तमःसमच्छायकलङ्कसंकुलं
निरीक्ष्य चक्रे स्वमदर्हनिशं शशी ॥७१॥

अभात् सभा सा स्मसभासुराननता
नृपस्य तीरं प्रतिबिम्बिताश्रिता ।
यया तडागोऽम्बुजयार्थमर्जितं
कुलं सुधांशोरिवहुलं वधोऽज्ञितव ॥७२॥

१ लसन्तो अङ्गमानसे द्वे अपि येषां तैः । २ स्वस्वामिदर्शिन्यः क्षणिकमनसः । ३ कर्णाभरणम । ४ स्वम=आत्मानम् ।

र[1]थाङ्गभाजा कमलानुषङ्गिणा
सरस्तदालोक्य स[2]-सार-सं-गतम्।
क्ष[3]णाद् गणागाहननीरसं गतं
दधे मनोऽन्तर्भवनीरसंगतम् ॥७३॥
अ[4]कारि धर्मेण जगज्जयो मया
शिली-मुखस्तोमसखेन शार्ङ्गिणा।
स[5] चापरागः स्वत एव मां भजन्
परागसः किं न वि[6]भागमानयेत्? ॥७४॥
प्रबोधयत्येष तडागबान्धवः

---

१ चक्रिणा। २ सार=श्रेष्ठं संगतं=मिलितं तेन सहितम् सारसयुक्तं वा, सारसः सहितं गत=प्राप्तम्। ३ क्षणेन लोकानामवगाहनेन नीरसं=रसाभावं=नीरसत्वं गतं प्राप्तम्। ४ धर्मेण =धनुषा। मया किंभूतेन, शिलीमुखस्तोमसखेन=बाणसहायेनेत्यर्थः, शार्ङ्गिणा= शार्ङ्गं=धनुः तद्धारकेण। कि० जगज्जयः, शिली=शिला अस्मिन् पर्वत इव तुलोपमा महान् दुष्करः गुरुर्वेत्यर्थः। धर्मपक्षे मुखे प्रारम्भे स्तोमो=यजः=पूजा सखा=मित्रं यस्य तेन। धर्मेण किं० शिली=जलौकाः, तत्प्रमुखाणां यः स्तोमः=समूहस्तस्य सखा इव सखा यः स शिलीमुखस्तोमसखः इन्द्रियादिरक्षक इत्यर्थः तेन। ५ सः=धर्मस्तु अपराग एव, पक्षे चापरागः=धनूरागः। ६ विगता भा यत्र तत्=विभं=नरकं तस्य अगं=वृक्षं शाल्मलिं न नयेत् काकुः।

कृताधिकोशाञ्जलीपद्मपाणिभिः ।
सरोजिनीस्तम्बकदम्बदकैतवात्
श्रियश्चलत्वं निगदन्निवेह नः ॥७५॥

जगच्चिरं जीवयता रमार्पणै-
[1]र्विरागता हंसविलासभाविता ।
सरोजिनीस्तम्बकदम्बकैतवात्
कृताऽमुना मे स्वरमानुषङ्गिणा ॥

[2]प्रभा-सितं वा [3]समयज्ञमुज्ज्वलं
विभावयेऽमुं [4]कलहंसशिक्षितम् ।
[5]प्रयोगकर्त्रा विधुना पदे पदे-

१ वीनां=पक्षिणां रागता, पक्षे विरक्तता, हंसानां विलासभावित्वं, पक्षे हंसो=जीवस्तद्भावित्वम्=अध्यात्मविचारः । २ प्रभा=बुद्धिः तया सितम्=उज्ज्वलम् । ३ समः समग्रः यज्ञः=पूजाविधिर्यस्मात् तत्र पूर्वं जलयात्रैव । ४ कलाः=मधुराः हंसाः=योगिविशेषास्तेभ्यः शिक्षितम् । ५ प्रयोगकर्त्रा=सूत्रकारकेण विधुना=चन्द्रनाम्ना; यद्वा प्रयोगः=प्रपञ्चः संसारस्य तत्कर्त्रा=विष्णुनाऽनुयातः, यद्वा विधुना=कृष्णपण्डितेन ।

ऽमृ[1]णाल ! शेषा[2]हिभुवाऽनु[3]यायि य[4]ः ॥७६॥

इति स्वचित्ते स विभाव्य भव्यधीः

प्रभुर्मुमुक्षुर्भवतो ययौ वनम् ।

जनेन चङ्क्रेण च भूतलस्पृशा-

ऽमृ[5]णालशेषाहिभुवाऽनुयायि य[6]ः ॥

गच्छाधीश्वरहीरहीरविजया-

म्नाये निकाये श्रियां

भृत्यः श्रीविजयप्रभाख्यसुगुरोः

श्रीमत्तपाख्ये गणे ।

शिष्यः प्राज्ञमणेः कृपादिविजय-

स्याग्रास्यमानाग्रणी-

श्चक्रे वाचकनाममेघविजयः

---

१ मृणा=हिंसा आलं='मिथ्या तद्रहितस्य कस्याप्यामन्त्रणं चाथवा कृतम् । २ शेषाहिभर्यस्य तेन विष्णुना, पक्षे शेषवंश्येन विधुना=चन्द्रेण रामचन्द्रेण, यद्वा, शेषाहिभुवा=पतञ्जलिना इत्यर्थः ३ अनुयातः=तत्तुल्यः सेवितः । ४ यः=तडागः । ५ अमृणालो=महाजनः, शेषः=क्षत्रियादिः, अहिभूः=वप्राधिकारी तेन, 'अहिः सर्पे वृत्रे वप्रे स्यात्" इत्यनेकार्थः । ६ नं० श्लो० १११ ।

शस्यां समस्यामिमाम् ॥७७॥

तस्मिन् विस्मयकृत्काव्ये
तुर्यः सर्गोऽभवत्तराम् ।
प्राप्नोतु शिष्टाचरणात्
प्रतिष्ठामप्यनुत्तराम् ॥७८॥

इति श्रीनैषधीयसमस्याकाव्यसमस्यायां महोपाध्यायश्रीमेघविजयगणि-
विरचितायां चतुर्थः सर्गः संपूर्णः ॥ श्रीः ॥



## ॥ अथ पञ्चमः सर्गः ॥

तरङ्गिणीरङ्कजुषः स्ववल्लभा
 रसा[1] रसानामवशा वशास्त्यजन् ।
अचीकरच्चक्रधरः प्रदेशनं
 यथेष्टमाहूय स तुष्टपूर्जनम् ॥१॥

प्रवर्धमानाः समिति[2]क्रियाम्बुधौ
 तरङ्गलेखा बिभरांबभूव यः ।
स मार्गणानां ममभीयुषां गणं
 प्रपद्य सद्योऽभिमुखीभवेन्न किम् ? ॥२॥

दिनाः क्षपा वेष्मितदाननः प्रपा[3]
 नृपाज्ञया दित्सुकरैश्वरैर्बभुः ।
दरोद्गतैः कोकनदौघकोरकैः
 सरित्प्रदेशा इव संगतद्विजाः[4] ॥३॥

स दानदेशः स्थिरचक्रभृद्रसः[5]

---

१ रसा=भूः । २ समितिः= युद्धम्, यतिचर्या च । ३ प्रपा-रूपाः । ४ द्विजाः=विप्राः पक्षिणश्च । ५ स्थिरश्चक्रिणो रसो यस्मिन् ।

सदा नदेशः स्थिरचक्रभृद्रसः ।
धृतप्रवालाङ्कुरसंचयश्च यद्
धृतप्रवालाङ्कुरसंचयश्रियः ॥४॥

महीयसः पङ्कजमण्डलस्य य-
श्छलेन लोकाशनयानजन्मनः ।
समं सितैः संचयनैश्च राजतैः
सुपर्वणां संगममादिशद् भृशम् ॥५॥

व्रजस्य चन्द्रोर्मृगनाभिजन्मन-
श्छलेन गौरस्य च मेचकस्य च ।
अमानि देवासुरमन्त्रभासुरं
मनस्विनाऽन्योन्यसुहृत्क्रियातुरम् ॥६॥

१ नदेशः=समुद्रः । २ स्थिराश्चक्राः=जीवविशेषास्तं-भृता रसा=भूर्यत्र । ३ प्रवालानि=विद्रुमाः पल्लवा वा, अङ्कुराः=काश्मीरजन्मादीनि ४ धृताः प्रवालानां=पल्लवानाम् अङ्कुराणां=जलानां संचयाः=संग्रहा यत्र दानदेशे । ५ चीयत इति चयः=राशिः=पुष्ट इत्यर्थः, ईदृशो दानदेशः । "प्रवालो विद्रुमे वीणा-दण्डेऽभिनवपल्लवे" इत्यनेकार्थः "अङ्कुरं रोम्णि सलिले रुधिरे-ऽभिनवोद्गमे" इत्यपि । ६ पद्माज्ञानं यद् मण्डलं वृन्दं तस्य । ७ लोकानाम् अशनं=भोजनं यानं=गमनं ताभ्यां जन्यस्य । ८ राजतैः=रूप्यमयैः । ९ सुपर्वणां=महान्सवानां देवानां वा । १० कर्पूरस्य ।

ग्रहीतुरुद्ग्राहयितुः करास्थितं
कुशोदकं तत् सुहिताय चोभयोः ।
नैलेन मेने सलिलेऽनिलीनयोः
स्वपावनं जीवनभावनं पुनः ॥७॥

नवं सरश्चोद्भवन्महोत्सवं
यथेष्टसृष्टाञ्जलिसृष्टवारिभिः ।
पराजितोऽभूल्लवणाब्धिरप्यत-
स्त्विषं विमुञ्चन् विधुकालकूटयोः ॥८॥

चलीकृता यत्र तरङ्गरिङ्गणै-
र्जिनेन्द्रदीक्षासमयोत्सवाम्बुधौ ।
हया दधुः स्वाप्लवनं महोर्मिनां
व्रजा गजानामपि संघचारिताम् ॥९॥

मिथो रथानामपि सादिनां ध्वजै-
रवालशैवालतापरम्परा ।
मलीमसै रेणुगणैः सखीकृताः

१ नरेण । २ विधोस्त्विट्मोक्तः सृष्टवारिप्राप्त्या तोषात्, मम स्पर्धाकर उत्थित इति कालकूटस्त्विड्मोक्तः । ३ संघचारी= मत्स्यः ।

पयोनिधेर्धर्मनिधेर्व्रतोत्सवे ॥१०॥

बले बलद्वेषिपुरस्सरे चले
हया ध्वजाः शोणरुचः प्रसृत्वराः ।
ध्रुवं दधुर्वाडवहव्यवाडव-
स्थितिं त्रिलोकीजनमङ्गमार्णवे ॥११॥

व्रती बभूव प्रभुराप्य शुक्रजां
चतुर्दशीं तां बहुलां च लोचकृत् ।
कचेषु मत्वेव कषायपावक-
स्थितिप्ररोहत्तमभूमधूमताम् ॥१२॥

प्रकाममादित्यमवाप्य कण्टकै-
स्तपस्यतोऽभूत् तनुर्ग्रहतः कटुः ।
पटुः समाधौ विमना मनाग् न सा
रसालसा वा नियमाद् यमादपि ॥१३॥

सुगार्चेन चन्दनैश्चन्द्रलेपनैः
करम्बितामोदभरं विवृण्वती ।

१ बलद्वेषी=इन्द्रः । २ "कटुश्चकार्ये मत्सरे च दूषणे च कटु स्मृतं । निकृते प्रियङ्गौ सुरभौ । ३ चन्द्रः=कर्पूरः । ४ आमोदेन विश्वपूरणी योगमाहात्म्यात् सर्वार्थसाधनी ।

तनुर्ननु प्रौढिममाधिमाधनै-
र्जिनस्य विश्वंभरनामिवाऽन्वशात् ॥१४॥
क्वचित् तनूत्सर्जनमुद्रया विभो-
रनार्त्तिमूर्त्तिर्वरिवर्त्ति सा स्म या ।
धृतस्फुटश्रीगृहविग्रहा दिवा-
निशं मृणालाभभुजावलम्बिनी ॥१५॥
यथाऽन्तिकस्थामरभक्तिवृष्टिभि-
र्जिने धृतध्यानधनं त्वऽधर्मणे ।
नवं सरस्तत्क्षणमप्यभूच्छ्रिया
सरोजिनी यत्रभवाप्समरायिता ॥१६॥
यदम्बुपूरप्रतिबिम्बितायति-
र्गणा ग्रहाणां पुरतोऽर्हतः प्रभोः ।
तरंस्तरङ्गेषु भवार्णवान्तरं
स्वमाह तीर्णं नटनेऽतिपाटवात् ॥१७॥
वने स्थितावस्य च चामरक्रियां
मरुच्चरङ्गैस्तरलस्तटद्रुमः ।
सदातपत्रायितपल्लवोच्चय-

चकार सत्कारपदं दिवौकसाम् ॥१८॥
न धीरता तादृगिह क्षमाधरे
दधौ जिनो यामुदधौ गभीरता ।
निमज्ज्य मैनाकमहीभृतः सतः
परीक्षणाद् वाम्बुनिधेश्चलत्तया ॥१९॥
विपक्षतां[1] यो गत एव योगतः
किमस्य शम्भोर्न नु[2] पक्षताऽक्षता ।
पुराऽपि पारापतपक्षिणो भये
ततान पक्षान् भुवनः[3] सपक्षताम् ॥२०॥
पयोधिलक्ष्मीमुषि केलिपल्वले
जिनेऽप्यनैकान्तिकता[4] कृता जनैः ।
तटेऽपि साधारणया धिया श्रिते
क्वचिन्न लेभे व्यभिचारचारिता ॥२१॥
कदापि देवोऽकृत हंससंशतो[5]

१ पक्षः=परित्यागस्तेन विरहितो विपक्षः । २ 'नु' वितर्के अस्य पक्षता=आनुकूल्यं सर्वत्र अक्षता=पूर्णा न, काकुः, सर्वस्य हितावहत्वात् । ३ तत्कृत्यतुलानिपातनात् । ४ पक्ष सपक्ष विपक्षवृत्तिरनैकान्तिक एव, स्याद्वादाद् वाऽनैकान्तिकः स जिनः न एकान्तिकः स्यादिति भावः । ५ सर्जावसर्दशः ।

गिरंसुहंसीकलनादमादरम ।
सुवर्णवर्णं जिनवर्णने कृते
बिडौजसा क्षोभयितुं मनोऽर्हतः ॥२२॥
पुरः किरन्तं विकरं चमत्करं
[1]समौक्तिकं मौक्तिकयुक्तमैक्षत ।
स तत्र चित्रं विचरन्तमन्तिके
मनागपि क्षुब्धमना हि नाऽभवत् ॥२३॥
तपस्यतस्तस्य विवन्दिषामिषात्
स्वरागतः स्निग्धमनास्स्वरागतः ।
स देवदेवस्य निषेवणापरं
हिरण्मयं हंसमबोधि [2]नैषधः ॥२४॥
प्रियासु बालासु रतक्षमासु च
ललन्तमेतं [3]चरणानुरागिणम् ।
विसिष्मिये वीक्ष्य नृपो विरुद्धता
निवारिता छन्दवशेऽर्हतेत्यसौ ॥२५॥

१ समम=अनुकूलं मृदुम् मौक्तिकं वाक्यं यस्य स तम् । २ नैषधः पूर्वं चक्रिन्वे चक्रपतिः । ३ प्रियाललनं चरणानुरागित्वं चेति विरुद्धता निवारिता ।

सितच्छदं तं चरणानुरागिणं
द्विपार्थितं पल्लवितं च बिभ्रतम् ।
विभोर्मनोऽन्तः स्मरमेव भावितुं
सुरेण चक्रे बहुधाऽऽयुधादरः ॥२६॥
कृताभियोगः स तु योगसंगम
प्रयोगदक्षेण तपोद्विपेन यत् ।
स्मरार्जितं रागमहीरुहाङ्कुरं
बभञ्ज मूलादनुकूलया धिया ॥२७॥
विमोहलीलां मिथुनालिपालितां
प्रदर्शयन् हंसमहामना मनः ।
शशाक नोच्चालयितुं विरागवान्
सिपेण चक्षुश्चरणद्वयस्य च ॥२८॥
महीमहेन्द्रस्तमवेक्ष्य स क्षणं
सुरं प्रशान्तं बहुधोपसर्गतः ।
जगाम पुर्यां प्रभुचर्यया मुदं
तदा दधानः स्मृतिमात्रधानधीः ॥२९॥
अवर्णयन् तच्चरितं विचिन्तयन्

१ निष्कपायमत्या ।

शकुन्तमेकान्तमनोविनोदनम् ।
स नैषधश्चानुदिनं सुधीरतो
सुधीरतां वीक्ष्य विभोश्चमत्कृतः ॥३०॥
प्रभोस्तपःसंतपनाद् वशीभव-
ञहो न पार्श्वं द्युमदां जनः सदा ।
प्रियावियोगाद् विधुरोऽपि निर्भरं
स्वमापुपूपुः परिचर्ययाऽर्यया ॥३१॥
प्रकृष्टषष्ठाष्टमपाक्षिकादिभि-
र्वनं मयोगामनघर्ममेवनैः ।
निरीक्ष्य देवं ध्रुवमेव देवता
कुतूहलाक्रान्तमना मनागभूत् ॥३२॥
अवश्यभव्येष्वनवग्रहग्रहा
नृणां मतिः क्रामति यत्क्रमानुगा ।
समूलमुन्मूलयितुं तदान्तरं
प्रचक्रमे चक्रमयं द्विषां क्रमात् ॥३३॥
पटुः पुरस्कृत्य पुराकृताकृतिं

१ यथा- [illegible] क्रमानुगा नृणां मतिः क्रामति=चलति ।

यया दिशा धावति वेधमः स्पृहा ।
भवस्य वश्यस्तदवश्यपश्यधीः
प्रवर्ततेऽनर्त्तितया तथाऽऽतुरः ॥३४॥
तपोविधौ मन्दरसुन्दराशयः
स्थिरः प्रभुः स्यान्न कदापि चञ्चलः ।
तृणेन वात्येव तयाऽनुगम्यते
भियेतरेणैव नु कातराक्रिया ॥३५॥
धृते समाधेर्विधिनाऽऽत्मबोधने
धनेऽपरस्मिन् न मुनेर्मनोरुचिः ।
अनात्मलीनस्य मलीनताऽऽहता
जनस्य चित्तेन भृशाऽवशात्मना ॥३६॥
अथावलम्ब्य क्षणमेकपादिकां
धरत्स्वयं धीरतयैकतालयम् ।
तिथौ नवम्यां शुचिपापपक्षजे
स शिश्रिये केवलबोधमुज्ज्वलम् ॥३७॥
तदुत्सवे कोऽपि जनः सुरो नवा

१ कर्मकर्तुः परमेष्ठस्य आत्मनः ।

तदा निदद्रावुपरल्वलं खगः ।

सुगन्धिपृष्टेरनु दिव्यनाटक-

प्रवर्त्तनेऽत्राप्सरसां प्रनर्त्तने ॥३८॥

समं तदोच्चैर्नमने समं पुनः

प्रपञ्चने संवरणे तथाऽऽसने ।

स निर्यगावर्जितकन्धरः शिरः-

प्रणामकृद् देवगणो नटन् बभौ ॥३९॥

स हंसदेवोऽपि विभोर्गुणावली-

निबद्धबुद्धिः समुपेत्य नृत्यकृत् ।

विशिष्टभक्तीर्बहुधा स्थितोऽन्तरे

विधाय पक्षेण रतैक्लमालसः ॥४०॥

सनालमात्मानननिर्जितप्रभं

प्रयुज्यमानं त्रिदशैः सरोरुहम् ।

धृतातपत्रत्रयरूपमावभौ

प्रभुप्रभावाद् बहुकाञ्चनाञ्चितम् ॥४१॥

१ रतं=नाटकरमणं तस्य क्लमः=खेदः । २ आत्मना=स्वरूपेण आननस्य निर्जिता प्रभा येन तत् । ३ "काञ्चनं हेम्नि किञ्जल्के" इत्यनेकार्थः ।

उपात्तलक्ष्म प्रभुवक्त्रपाणिना
  ह्रियाऽऽनतं काञ्चनमम्बुजन्म किम् ।
तमुच्छ्रितच्छत्रमिषेण दण्डभृद्
  निषेवते स्माहृतमुक्तसंपदा ॥४२॥

अहर्निशं सेवनया विभोर्द्विधा
  सचामरं चाऽमरमानसे प्रियम् ।
अबुद्ध तं विद्रुमदण्डमण्डितं
  पवित्रहस्तं शुचिमेव पण्डितः ॥४३॥

चकार कश्चिद् वरणत्रयीं न किं
  सुरश्च सिंहासनमर्हतः पुरः ।
परो महेन्द्रध्वजमासभक्तये
  सपीनमम्भःप्रभुचामरं च किम ॥४४॥

कृतावरोहस्य हयादुपानहौ
  विनेयुपस्तत्र बलद्विषस्तदा ।

१ पविः=वज्रं आयत इति पवित्रः=इन्द्रस्तस्य हस्तम=इन्द्र-हस्तं पण्डितः शुचि=पवित्रम अजानान्: किंकरं द्विधा सचामरम् । २ पीनवर्णमहिनम, अम्भःप्रभोः=वरुणस्य चामरमिव । ३इन्द्रस्य ।

नियोगतस्ताः सुमनःपरम्पराः
परागपूर्णा ववृषुर्विकस्वराः ॥४५॥
सुवर्णपद्मोदरचारचारुतां
ततः पदं रेजतुरस्य बिभ्रती ।
निवेशकल्याणपदं सुसंपदं
सुवर्णमेवामिव धर्तुमुत्सुके ॥४६॥
महोत्सवेऽस्मिन्नसुरैः सुरैः समं
तथैव मैत्री जनसंनिधेरभूत् ।
तयोः प्रवालैर्वनयोस्[1]तथाम्बुजै-
रत्रापि मोदः सुमनस्तया यथा ॥४७॥
रुजा[2]विरोधेतिकलिक्रिया मृते-
र्भियाऽभवद् निर्विषया[3]ऽर्हतः श्रिया ।
रसेन सेने अपि सख्यमीयतु-
र्नियोक्तुकामे किमु बद्धवर्मणी ॥४८॥

---

१ एकं वनम्=उद्यानम्, द्वितीयं वनं=पानीयम् अनयोर्द्वयो-रपि प्रवालैः=पल्लवैः, तथा अम्बुजैः, मोदः=हर्षः अत्रापि। २ रोग-ज्वर-ईति क्लेशानां क्रियेत्यर्थः। ३ निर्गतः विषयः प्रसारो यस्याः सा।

विधाय मूर्त्तिं कपटेन[1] वामनीं
शनैश्चरन् यां त्रिपदीमदीधरत् ।
प्रसृत्वरां तां पुरुषोत्तमः परा-
मनेकपेऽधत्त गणेशपेशले ॥४९॥
त्रिविक्रमो[2]ऽरिष्टबलं पिनष्टि यः
स्वयं बलिध्वंसि[3]विडम्बिनीमयम् ।
तनूं न धर्त्ता किमनूनतेजसा
सचक्र[4]पाणिश्च कृपाणिनां प्रभुः ॥५०॥
पुरा व्रते तीव्रतयैव केवलात्
तपःकलाऽश्रान्तनितान्तशान्तधीः ।
उपेतपार्श्वश्चरणेन मौनिना
मृषा चकारेप तृषां[5] वृषार्चितः[6] ॥५१॥
यतोऽनिदूरादपि ताप्यते वपु-
र्हृशोर्भृशोल्लासिदृशापि नाप्यते ।
तमर्हतः संनिधिनाप्तमोहृदं

१ कपटेन=विनयरूपेण वामनीं=नम्राम् । २ त्रिषु=ज्ञानादिषु विक्रमः=बलं यस्य सः । ३ बलिध्वंसिनः=कृष्णस्य विडम्बिनीं=जित्वरीम् । ४ चक्रेण सहितः पाणिर्यस्य सः । ५ तृषां=लोभम् । ६ इन्द्रः ।

नृपः[1] पतङ्गं समधत्त पाणिना ॥५२॥
तदात्त[2]मात्मानमवेत्य संभ्रमाद्
मदादिनाऽनर्थकृताऽऽप्तवाक्यतः ।
जराजनुर्मृत्युमुमुक्षुणा नृणां
गणेन दीक्षा जगृहेऽगृहेप्सुना ॥५३॥
पतङ्गवत् कश्चन मद्मपञ्जरात्
पुनः पुनः प्रायमदुत्प्लवाय सः ।
स्वकर्ममर्लीनतया मलीनधी-
र्गृहे व्रतान्येव बभार भारमुक् ॥५४॥
प्रभोर्गिराऽन्तःप्रतिबुद्धमानसः
खगो मृगो वाऽप्यगजो मतङ्गजः ।
गतो विरुत्यो[3]ड्डयने[4] निराशतां
प्रपद्य सद्यः प्रणमन् ययौ वनम् ॥५५॥

---

१ नृपः=भूचरो राजापि पतङ्गं=सूर्यं पाणिना मैत्रीवशात् अधत्त । २ मदादिना आत्तं=गृहीतम् । ३ विरुत्य=शब्दं विधाय पक्षिणो मुख्यत्वाद् उड्डयनं विरुतं च, लक्षणया खम्वशब्दित-गत्यादि । ४ मृगे उड्डयन = उत्प्लुत्य गमनम्, गजे उड्डयनं = शीघ्र-गमनमात्रम्, निराशतां = निर्लोभतां प्रपद्य = स्वीकृत्य उड्डयने प्रणमन् वनं ययौ इत्यर्थः ।

वयोगणः सुव्रतभाग् निशाशन
निरस्य जीवान्तकबन्धनेऽप्यहो ।
न तत्प्रदत्तं फलमादिताऽऽनने
करौ निरोद्धुर्दशति स्म केवलम् ॥५६॥

ससंभ्रमोत्थानपतत्कुलाकुलं
विमोचितात्मा कथमप्यतः स्वतः ।
कुलायमास्थाय जिनोपदेशतः
स्मरन् व्रतं प्रासुकभुक्तिभागभूत् ॥५७॥

मृगः शृगालादिररण्यजः परः
सरः प्रपद्योत्कतयाऽनुकम्पनाम् ।
विचारयन् निर्भरमप्यपादृणा-
मचित्तमावाहगतं स्वतन्त्रधीः ॥५८॥

पुरे वने वा ममतामृते प्रभौ
सरस्युरर्निर्मितमम्बुभिर्भृतम् ।
तमूर्मिलोलैः पतगाग्रहाद् नृपं
स्वशब्दितैर्वान्यमिवाभ्यमन्त्रयत् ॥५९॥

१ निवार्य । २ स्वकूजनैः पक्षिणामाग्रहादिव नृपं = नरमुख्यम् अभ्यमन्त्रयत् = आजुहाव ।

जलं हि साङ्गं किल गाङ्गमङ्गिना-
मपुण्ययोगाद् न हि पुण्यमिष्यते ।
सरस्तदम्भोग्रहदम्भसंभवं
न्यवारयद् वारिरुहैः करैरिव ॥९०॥

पतत्त्रिणा तद् रुचिरेण वञ्चितं
न राजहंसेन पदानुरागिणा ।
न लक्षणैः श्रीकमलाकरैः परैः
सरोऽरुचच्चारु विभोः पदश्रिया ॥९१॥

कृते विहारे विभुना ततः समं
श्रियः प्रयान्त्या प्रविहाय पल्वलम् ।
अधायि चक्रेण तु हंसकप्रभा

१ सरः स्वयं तस्या गङ्गाया अम्भोग्रहणं पुण्यमिति कपट-नाटकं न्यवारयत्, अपुण्यं गाङ्गं वारि न ग्राह्यमिति भावः।
२ भगवद्विहारे चक्रं व्योम्नि चलति, तत्रायं भावः; श्रियः नूपुरमेतत् पल्वलं विहाय गच्छन्त्याः; अथवा, चक्रेण नभः-सरस्याः घनपुष्करोदयः अधायि = आकाशरूपे तटाके कमल-मिदं जातम् :

"पुष्करं द्वीपतीर्थाहिखगरागौषधान्तरे ।
तूर्यास्येऽसिफले काण्डे शुण्डाग्रे खे जलेऽम्बुजे ॥"

हंसकं = नूपुरं, पक्षे सूर्यस्य प्रभा। अत्र जलार्द्रतावशाद् नूपुरे न शब्दः, प्रभा तु भवत्येव।

नभःसरस्या घनपुष्करोदयः ॥६२॥
सुरैः कृताऽऽजानुपदं मणीचकैः
सुगन्धिभिर्वृष्टिरिहालिमालया ।
चलत्पदाम्भोरुहनूपुरोपमा
समादधे स्मेरदृशां विशां पथि ॥६३॥
सरित्प्रचारेऽपि सितच्छदांस्तदा
स्वभावनालीकरुचो व्रतिव्रजे ।
निरीक्ष्य सारूप्यधिया शनैश्चरा
चुकूज कूले कलहंसमण्डली ॥६४॥
जिनानुरागाद् द्युमदाऽनुयायिना
स्वहंसरूपावलिभिः समं पथि ।
क्वचित् नटिन्या निजजातिदर्शना-
च्चुकूज कूले कलहंसमण्डली ॥
प्रभोः प्रभावादविरोधबोधनात्
सहैव सिंहेन मृगी वनेऽचरत् ।

१ सितच्छदान = मुनीन दृष्ट्वा हंसालिः चुकूज । २ स्वभावेन न अलीकरुचः = मुनयः, पक्षे नालीकं = कमलम् । ३ सादृश्य-मत्या ।

विडालबालेन समं रिरंसया
चुकूज कूले कलहंसमण्डली ॥
नवा[1] सयोग्या[2] वसुधेयमीदृशः
प्रभोर्विहारे त्रिदशैरपि स्तुता ।
रमान् न कांस्कान् समसूत नूतनान्
स्वतः स्वमापूर्य च तूर्यनिःस्वनैः ॥६५॥
दिगाऽऽह पूर्वाप्यपरामधो भव
त्वमङ्ग ! यस्याः पतिरुज्झितस्थितिः ।
जडेषु नाथः कृतवारुणीरुचि-
र्ममाशितन्द्रस्तु शतक्रतुर्जिने ॥६६॥
शून्यं नभस्तद्गमनेन शून्यधी-
र्न किं हि नः कौशिक एव यत्पतिः ।
इति प्रहाय क्षितिमाश्रिता नभः
प्रभौ समस्ता विबुधा जयत्यभुः[3] ॥६७॥
अजन्यभावेऽजनि नातिभक्तिभाग्[4]

1. नवा = नवीना । २ योग्यैः सह सयोग्या । ३ जयति प्रभौ सर्वे विबुधाः = देवाः नभो विहाय भूमिं श्रिताः अभुः = रेजुः । ४ यो जिने भक्तिभाग् न अजनि = न जातः । किं० जिने, अजन्यभावे = उत्पाते सति जगत्त्रयेऽपि शान्तिकरे । तद्दिनान् खगाः = पक्षिणः सुरासुरा वा तम् आनुकस्थुः ।

जगत्त्रये शान्तिकरे जिनेऽपि यः ।
नरः सुरो वोषसि तद्दिनादिव
खगास्तमाचुक्रुशुरारवैः खलु ॥६८॥

भवेऽस्मदीयेऽजनि यत्र न प्रभुः[1]
प्रभा[2] स्वभावेन जिनेन्द्रसेवने ।
प्रतिप्रभातं द्विजरूपमागताः
खगा[3]स्तमाचुक्रुशुरारवैः खलु[4] ॥६९॥

गच्छाधीश्वरहीरहीरविजया-
म्नाये निकाये धियां
प्रेष्यः श्रीविजयप्रभाख्यसुगुरोः
श्रीमत्तपाख्ये गणे ।
शिष्यः प्राज्ञमणेः कृपादिविजय-
स्याशास्यमानाग्रणी-
श्चक्रे वाचकनाममेघविजयः
शस्यां समस्यामिमाम् ॥७०॥

१ प्रभुः = समर्था । २ प्रभा = बुद्धिः । ३ खगाः = मिथ्यादृशो देवा विद्याधरा वा । ४ नैषधीयच० प्रथमे सर्गे श्लो० १२८ ।

तस्मिन् विस्मयकृत्काव्ये
पञ्चमः पञ्चमाञ्चितः ।
सर्गः सज्जनसंसर्गात्
श्रेयोऽध्ययनतत्परैः ॥७१॥

इति श्रीनैषधीयमहाकाव्यसमस्यायां महोपाध्यायश्रीमेघविजयगणि-
पूरितायां पञ्चमः सर्गः समाप्त. ॥ श्रीः ॥

१ पञ्चमैः=चतुरैः अञ्चितः=प्रशस्तः "पञ्चमो रुचिरे दक्षे"
इत्यनेकार्थः ।

## ॥ अथ षष्ठः सर्गः ॥

न जातरूपच्छदजातरूपता
 न कङ्कणाद्याभरणैरलंकृतिः ।
मुमुक्षुणा क्वापि विधीयतां धिया
 [1]स्वजातरूपैकसिचा भवद्रुचा ॥१॥

[2]वदन् स्वरागादपि वैभवस्थिति-
 र्द्विजस्य दृष्टेयमिति स्तुवन् मुहुः ।
विनिश्चिकायैष हि वै भवस्थितिं
 निजां जराजन्मकृताधिसंस्थिताम् ॥२॥

सुखेऽपि नालीकरुचिर्महात्मनां
 न संशयो वा न [3]पराशनाशयः ।
अवादि तेनाथ [4]समानसौकसा-

---

१ स्वस्मिन् जातं रूपं तदेव एकं सिक् यस्य तेन: भवन्ती रुक् कान्तिर्यस्य स तेन । २ यः कश्चिद् रागात्=स्नेहाद् द्विजस्य= ऋषेः वैभवस्थितिं वदन् यद्वा, इयं वैभवस्थितिर्दृष्टा इति स्तुवन् वै=निश्चितं निजां भवस्थितिं विनिश्चिकाय । ३ पराशनं=हिंसा । ४ समाना=सदृशा तुल्या वा ये सौकसः= अगारिणस्तेषामुपाश्रयन्ती या ससन्=सभा तस्याम् अर्हता इत्यवादि ।

मुपाश्रयत्संसदि चार्हतेत्यहो ॥३॥
तदस्ति नाभ्यस्तमिह द्युसद्बलं
छलं जयन्मन्त्रकलं च चञ्चलम् ।
तनूभृता येन यमोऽपि जीयते
जना[1]धिनाथः कर[2]पञ्जरस्पृशा ॥४॥
धिगस्तु तृष्णातरलं भवन्मनः
समुच्छलद्वाजिबलं विलोक्य यत् ।
परं[3] परार्थाच्च परम्परार्थतः[4]
समुन्मिषद्भूरिमिषेषु हे जनाः ! ॥५॥
करो[5]ऽपि किं दुर्जनतां धनान्वितान्
समीक्ष्य पक्षान्मम हेम[6]जन्मनः ।
भृशं सखायो विवदन्त इत्यतः
परिग्रहे नाग्रहयालुता हिता ॥६॥

---

१ जनानाम् आधेः=मनःपीडाया नाथः=स्वामी । २ यमस्य करपञ्जरवासिना । ३ परः=उत्कृष्टः योऽर्थः ततः=शिवसाधनात् परं=दूरे । ४ परम्परया=क्रमेण अर्थतः=धनात्, भूरिमिषेषु समुन्मिषन्=जागरूकम् । ५ मित्रं प्रति अन्यमित्रोक्तिरियम् । ६ हेमसमुत्पन्नित इत्यर्थः ।

मितायुषा[1] तृड् जनिता जनाऽञ्जनै-
र्न बाधिका स्यान्[2]नभसो [3]नवाऽधिका ।
तवार्णवस्येव तुषारशीकरैः
प्रवृद्धवेलेव [4]तुषाररोचिषा ॥७॥
सदाऽऽदिनाथार्चनिकादिना दिना-
गमे [5]समेता स धनं जनोऽर्जनैः ।
मृषा कषायानपि मा कृथा वृथा
भवे[6]दमीभिः कमलोदयः कियान् ? ॥८॥
न[7] केवलं प्राणिवधो वधो मम-
प्रसक्तिभाजैकवपुष्मतीहितः ।
तदाश्रयान्याङ्गिजिघांसयाशयः
कृतः क्षयायैव स नारकाश्रये ॥९॥

---

१ हे जन ! तव मितायुषा कर्तृभूतेन अञ्जनैः=पापैर्जनिता तृड् न बाधिका भवेत्=निरोधिका न स्यात् । २ आकाशात् । ३ नवीना । ४ चन्द्रेण । ५ किं० जनः, प्रातः पूजादिना धनं समेता=प्राप्ता । ६ अमीभिः=कषायैः कियान् कमलोदयः=लक्ष्मीलाभः स्यात् । ७ एकजीवे वधः केवलं प्राणिवधो न, किन्तु तदाश्रया अन्येऽङ्गिनस्तेषां जिघांसया कृत आशयः=अभिप्रायः नारके क्षयायैव भवेत् । ममो=ममत्वं, ममशब्दोऽदन्तः, अमम-निर्ममा-दिवत् : तत्र प्रसक्तिभाजा=रागिणा ईहितः=वितर्कितः ।

इमां नु शिक्षां कथयन्तमीश्वरं
त्वदीक्षणाद् विश्वमितान्तरात्मनः ।
करोतु रक्षां पततो भवाम्बुधा-
वितीह चक्रायुधभूपतिर्जगौ ॥१०॥

ततः प्रपन्नव्रतमेनमेनसा
वियुक्तमायुङ्क्त गणेशितुः पदे ।
विगर्हितं धर्मधनैर्निबर्हणं
वदन्तमेवं सकलेभ्यसंसदि ॥११॥

परेऽपि चाक्षत्रिमिता गणेश्वरा
बभूवुराप्ताः सदृशं दृशं भृशम् ।
गणेऽनुगानामविगानधीबलाद्
विशिष्य विश्वामजुषां द्विषामपि ॥१२॥

पदे पदे सन्ति भटा रणोत्कटाः
प्रशामयन्ते शमिनः स्म तानपि ।
द्वियुक्तषष्ट्या हि सहस्रसंख्यया-

१. अनुगानां तथा द्विषां गणे सदृशं दृशमाप्ताः अक्षत्रिमिताः=षट्त्रिंशद् गणधराः । *६२ सहस्रा. शमिनः=यतयः ।

द्विधापि शान्तिकमलीनचेतसः ॥१३॥
सदा तदार्यापटलेषु शूकता-
ऽऽनतेषु हिंसारस एव पूर्यते ।
क्वचित् क्षमायां न मनाक्, तदुन्मनाः
स नारकानेव निषेवनां न किम् ? ॥१४॥
प्रमाणमार्यास्वपि भूर्गमेर्मितै-
रभूत् सहस्रैर्यदुदीर्णया गिरा ।
धिगीदृशं ते नृपते ! कुविक्रमं
प्रजेशमूचे मृगयाऽशुचिं शुचिः ॥१४॥
अविक्रियं वैक्रियलब्धिशालिनां
प्रभुर्यतोऽप्यङ्गसहस्रमालिनाम् ।
दयां दिदेश स्थलनीरचारिणि

१ शान्तिः=शमो जिनश्च । २ तस्य भगवतः आर्यासमूहेषु दयाभावे आनतेषु सन्तु क्षमायां=भूम्याम एव हिंसारसः क्वचिदपि मनाग् न पूर्यते. इतिहेतोः हिंसारसे उन्मनाः स=जनः नारकानेव न किं निषेवनाम ? नतेषु=प्रह्वीभूतेषु "आसक्तः प्रवणः प्रह्वः' 'णम प्रह्वीभावे धातुः । ३ यासाम् आर्याणां गिरा=वाणया प्रजापि ज्ञानमाप्य ईशं=राजानमूचे, 'हे नृपते ! ते=तव कुविक्रमं धिक् ।

कृपाश्रये यः कृपणे पतत्रिणि ॥१६॥
फलेन मूलेन च वारिभूरुहां
तथा परेषामनुकम्पयाऽन्विता ।
*चतुःशताढ्यात्रिसहस्रवादिन-
श्चतुःसहस्रा मनसोऽवबोधिनः ॥१७॥
शतत्रयीयुक्तचतुःसहस्रिका
मुनेरिवेत्थं ममयस्य-वृत्तयः ।
अमुः प्रभोः केवलबोधशालिनो
दिशां प्रकाशादहिमांशुमालिनः ॥१८॥
जगत्त्रयं दण्डितमात्मसात् कृतं
विमोहराजा रजता रजोबले ।
त्वयाऽद्य तस्मिन्नपि दण्डधारिणा
कृता त्रिलोकी प्रभुताङ्किता करे ॥१९॥

---

* ३४०० वादिनो मुनयः । १ मनःपर्ययज्ञानिनः । २ वृत्ती-नां विशेषणत्वात् स्त्रीलिङ्गम । ३ एकवचनं जातौ । ४ 'मः'= शम्भुः=तीर्थकरः तत्प्रधानस्य=तदाज्ञानुचारिमुनेः=केवलिनः; मम=ममत्वं यस्यति=क्षिपति इति शप्रत्यये ममयस्या. इति वृत्ति-विशेषणं वा ।

प्रणूयमानस्त्रिमहस्रयोगिनां
गणोऽवधिज्ञानवतां सुरैरिति ।
विभूषिताऽद्यापि च येन सम्भ्रम-
त्कथं न पत्या धरणी ह्रणीयते ॥२०॥

इतीदृशैस्तं विरचय्य वाङ्मयं-
र्गणेश्वरैः पूर्वगणं पट्कृतः ।
मुमुक्षुवर्गोऽश्मशर्नामितः स्थित-
स्तपोभरं यः स्वयमर्हतेरितः ॥२१॥

विलक्षयुक्ता नवतिः सहस्रकाः
सचित्रवैलक्ष्यकृपं नृपं खगः ।
क्षमां गता वाऽणुयतिः प्रतिष्ठित-
श्चकार वाचा परमार्हतं बहुम् ॥२२॥

१ येन गणेन, विभूषिता धरणी अद्यापि न ह्रणीयते । किं० येन, पत्या स्वामिना । २ सम्भ्रमत्कथं सं=सम्यक्प्रकारेण भ्रमन्ती कथा यत्र तत्, क्रियाविशेषणम् । ३ पूर्वगणं विरचय्य पट्टे गिङ्गितः कृतः पट्कृतः । ४ लक्ष्यन्त इति लक्षाः=अङ्काः=गणना, विगताः अङ्का यत्र तद् विलक्षं तस्य भावः वैलक्ष्यम्; चित्रं=नानाश्च तद् वैलक्ष्यं च तेन सहिता कृपा यस्मिन्, तम् । ५ कश्चिद् विद्याधरः आकाशचारी भूचारी वा श्रावकः । ६ श्रावकः ।

उ[1]पासिकानां निवहास्त्रिलक्षभृत्
पुनः सहस्रत्रिनवत्याधिष्ठितः ।
दयासमुद्रे स त[2]दाशयेऽनिशी-
बभूव रत्नाकर एव केवलः ॥२३॥
प्रभुर्विजह्रे भुवि यत्र केवली
बलीयसो मोहगिरीन् विभेदयन् ।
रसैः प्रसन्ने जनमानसे सखी-
चकार कारुण्यरसापगा गिरः ॥२४॥
[3]मदेकपुत्रा जननी जगातुरा
पिता सनत्पूर्वकुमारतात्विषम् ।
पुरो गतौ स्वस्य निनंसयाऽऽगतौ
विमोच्य मोहात् स हि तावबूबुधत् ॥२५॥
प्रवर्त्तिनी बाल्यत एव सुव्रता-
[4]नवप्रसूतिर्व[5]रटा तपस्विनी ।

---

१ श्राविकाणाम् । २ तदाशये नृपाशये । ३ अहमेव एकः पुत्रो यस्याः सा । ४ नवनं नवः=जिनस्तवः तस्य प्रसूतिर्यस्याः सा: अनवप्रसूतिर्वा=न विद्यते नवा प्रसूतिर्यस्याः सा । ५ वरम् अटतीति वरटा, पृषोदरादित्वात् . "वरटा हंसयोषिति गन्धोत्याम " इत्यनेकार्थः. सितच्छदत्वाद् वरटाया उपमा .

स्थिरा सुहृग्मानसनीरजालये
शुचिः सपक्षा चरणानुरागिणी ॥२६॥
मुनेर्गृहस्थस्य च वाऽर्हदागमः
फलानि दत्ते त्रिदिवं शिवं ध्रुवम् ।
गतिस्तयोरेव, जनस्तमर्दयन्
रसेन हीनो भविता घनातपात् ॥२७॥
अहर्निशं सांतपनक्रियाविधौ
प्रवृत्तिभाग् जैनरुचिं विना जनः ।
अधः पतेत् दुःखममुष्य बिभ्रत-
महो विधे ! त्वां करुणा रुणाद्धि न ॥२८॥
मुहूर्त्तमात्रं भवनिन्दया दया-
दरेण संसाध्य धियार्हतं मतम् ।
शुभं लभन्ते भविनो विनोदतः
क्षणेन मुक्त्यम्बुजलोचनायुजः ॥२९॥
स्त्रियः श्रियो वा विरहासहा सहा-
सखाः सखायः श्रवदश्रवो मम ।

---

१ तयोः=मुनिगृह=स्थयोः गतिः एव आगमः । २ तम=आग-मम, अर्दयन् त्रोटयन् भिन्दन् ।

इति प्रियालीनमलीनमानमा
न सातभाजोऽत्र परत्र देहिनः ॥३०॥
कुशामनेनापि कुशासनेन ये[1]
नयेऽनुरक्ता बहुविप्रयोगतः ।
निवृत्तिमेष्यन्ति परं दुरुत्तर-
स्तरस्विभिर्मोहमहोदधिस्तु तैः ॥३१॥
निजस्य वप्रात्रितयाग्रनिष्ठया[2]
जनोऽत्र निर्वाणिकया हतेऽशिवे ।[3]
इति स्तुते स्मातिमुदेष शोपित-
स्त्वयैव मातः ! सुतशोकसागरः ॥३२॥
मदर्थसंदेशमृणालमन्थरः[4]
कदाऽभ्युपेता पथिकोऽथ बान्धवः ।
इतीह पृष्टा गरुडोऽपि यक्षराट्
तदाऽऽचचक्षेऽस्य[5] हितं ममाक्षिकः ॥३३॥

---

१ ये कुशासनेन कुप्रवचनेन नये मार्गे शास्त्रे वा रागिणस्ते कदाचिद् निवृत्तिं वैराग्यम् एष्यन्ति, परं तैर्मोहार्णवो दुरुत्तरः । २ निर्वाणी देवी । ३ जनो निर्वाणीम् इति स्तुते स्म । ४ मम कारणमाश्रित्य मृणा=हिंसा कस्यापि दुःखदानं, तथा, आलम् असत्यं तत्र मन्थरः अलसः हिंसातोऽसत्यतश्च निवृत्त इत्यर्थः । ५ प्रच्छकस्य ।

मया नु पृष्टो भगवद्विवन्दिषुः
प्रियः कियद्दूर इति [1]न्वयोदितं ।
विलम्बतेऽमाविति मा पराङ्मुखी
सखी सखीं तां निजगाद नाऽऽदरात् ॥४३॥

[2]कंचित् प्रभातप्रभया भयादृते
प्रमाद्यतो नीलमणित्विषा निशि ।
विलोकयन्त्या रुदतोऽथ पक्षिणः
स्त्रियाः क्षणोऽभूत्कृतलक्षलक्षणः ॥३५॥

न यावता भागवती लसन्नया
श्रुताऽस्ति गौस्तावदभीष्टता परे ।
चलाशु तस्याः श्रवणे विचक्षणः
[3]प्रिये ! स कीदृग् भविता तव क्षणः ? ॥३६॥

कथं विधातर्मयि पाणिपङ्कजाद्
[4]विधेर्जिनस्याशनपुण्यमुद्भवेत् ।

१ न्वया=अन्यया न्वशब्दोऽन्यार्थः । २ चक्रवाकादीन् नीलमणित्विषा भ्रमाद् निशि रुदतः पश्यन्त्याः, भयं विना प्रभातप्रभयापि रुदतः, 'अद्यापि न रात्रिगता, कदा जिनदर्शनं करिष्ये' इत्याशयः । ३ कश्चित् पतिर्जिनं विवन्दिषुः प्रियां प्रत्याह, हे प्रिये ! शीघ्रं चल । ४ विधेः शुद्धक्रियातः ।

इतीव सौराष्ट्रिकभव्यचिन्तनैः
स्थितः प्रभुः श्रीविमलाचलोपरि ॥३७॥
स्थितिक्रिया मामचतुष्टये प्रभो !
तव प्रिया शैत्यमृदुत्वशिल्पिनः ।
ऋतोर्जनस्येव सुरैः समं भव-
त्विति प्रचक्रे सफलामसौ गिरम् ॥३८॥
तवाश्रयादेव च शान्तिरप्यभूद्
भियां प्रदेशे जिन ! तत्तवालिके ।
त्रियोऽक्षयमेऽवल्लभयेति निर्गता-
क्षरालिरीत्याऽत्र कदाप्यटाट्यते ॥३९॥
गुरुत्वभावात् शुचिशास्त्रसंभवात्
सुरार्चितत्वाद्दतिपुण्यभूभवात् ।
अदीदिपत् तीर्थकृदित्यसौ विभो-
र्लिपिर्ललाटंतपनिष्टुराक्षरा ॥४०॥

१ हे प्रभो! मामचतुष्टये तव स्थितिर्जनस्य प्रिया: किं० तव, शैत्यं मृदुत्वं च तस्य शिल्पिनः कारकस्य, शैत्यं कामक्रोधोपशमात्, मृदुत्वं मानोपशमात्, जनस्य इति गिरं=वाणीं सफलां चक्रे । २ अवल्लभया=अनिष्टया । ३ 'अट गतौ', 'गत्यर्थाः प्राप्त्यर्थाः', प्राप्यते ।

अयि त्वयूथ्यैरशनिक्षतोपमं
समं विषेहेऽप्युपसर्गकारणम् ।
सुरैर्नरैर्वा पशुभिः सहासुरैः
कृतं त्वमीषां विकृतं न मानसम् ॥४१॥
भुवं पुनानस्य तवेति निर्गले-
न्ममाऽद्य वृत्तान्तमिमं वनोदिता ।
तनोति संसद् दिवि गायनैः प्रभो !
पुरन्दरस्यापि पुरो महोदयम् ॥४२॥
प्रभोर्विहारे मगधेऽपि मागधैः
प्रवर्ण्यमाने विविधैर्महोत्सवैः ।
मुखानि लोलाक्षि ! दिशामसंशयं
प्रियेऽवदत्पश्य विभूषणैरितः ॥४३॥
स्वामिन्ध्रुवापसमयोन्नताचित-
स्तनूं प्रिये ! पश्य महोज्ज्वलां दिशाम् ।
मुखान्यमुष्याः किरणैश्च तामसाद्
दशापि शून्यानि विलोकयिष्यसि ॥४४॥

---

१. हं निर्गलन्मम=त्यजन्ममन्व ।

ममैव शोके[1]न विदीर्णवक्षमा
मनः किमाकस्मिकमद्य नोद्यतम् ।
निवेदितुं सर्वविदे तदास्पदे
विडौजमाऽगामि भुवस्तलेऽञ्जमा ॥४५॥
मयाऽद्य मुक्तिः प्रतिपत्स्यते श्रिया
त्वया[2] विचित्राङ्गि ! विपत्स्यते यदि ।
निषेवणाद् मे न कदापि मामतः
समेतशैलं चलितुं तु मा भज ॥४६॥
विहाय सर्वामथ तीर्थकृच्छ्रियं
निभुर्ययौ तद्गिरिशृङ्गमुन्नतम् ।
तदाऽस्मि दैवेन हतोऽपि हा हतः
सुरेशितेति प्रलपन्नुपागमत् ॥४७॥
त्रयोदशाहे किल शुक्रजेऽमिते
जिनः प्रपन्नानशनः शिवं ययौ ।

१ शोकेन न उद्यनम् । २ त्वया=अन्यया, त्वशब्दोऽन्यार्थः । विचित्राणि अङ्गानि तीर्थंकरशरीराणि साधनानि यस्यास्तत्सं-बोधने हे विचित्राङ्गि ! त्वया=अन्यया भवत्या मे निषेवणात् कदापि श्रिया न विपत्स्यते अतः मां मा भज ।

अगुर्विनेया नवशत्यनुप्रभु[1]
स्फुटं यतस्तेऽशिशवः[2] परासवः[3] ॥४८॥
तत्रापि हा हा विरहात्[4] क्षुधाकुलाः
कुलाश्रया अन्यतपस्विनोऽधुना ।
त्वयीश ! भुक्ते त्वनुभुञ्जतामिति
गणीन्द्रमाशास्त हरिः प्रशस्तधीः ॥४९॥
विधाय कल्याणककर्म मोत्सवं
कुलायकूलेषु[5] विलुठ्य तेषु ते ।
खगा इव स्तूपतटेषु च क्रमाद्
दिवं ययुस्त्यक्तशुचः सुरेश्वराः ॥५०॥
ततो विजह्रुर्गणिनः समंयता
उपासकैर्भूपतिभिः कृतार्चनाः ।
चिरेण लब्धा बहुभिर्मनोरथै-
रुपादिशन्तः प्रभुशान्तिशासनम् ॥५१॥

१ प्रभोः पश्चात् अनुप्रभु, अत्र "विभक्ति" (सि० हे० ३।१।३९) इत्यादिना ऽव्ययीभावः । २ अशिशवः=तरुणा वृद्धा वा । ३ परे सिद्धा ज्ञानरूपा वा असवः प्राणा येषां ते । ४ विरहोऽत्र भोजनादेः, अधिकारात् । ५ कुलेषु=गृहेषु आयः=ध्वजादिस्तत्प्रधानं कूलं तटं येषु ईदृशानि स्तूपतटानि स्तूपभूमयः; "कूलं तटे सैन्यपृष्ठे तडागस्तूपयोरपि" इत्यनेकार्थः ।

प्रभोर्विमुक्तेः पदमाश्रिताः सुरा
अपूपुरन्नीप्सितमंह्रिमेविनाम् ।
कदापि साक्षाद्भवनात् कदाचन
गताः क्षणेनाऽस्फुटितेक्षणा ममम् ॥५२॥

सुताः कमाहूय चिराय चुङ्कृतै-
रिवाण्डजाः पक्षबलं तथागमम् ।
इहाश्रयन्तामिति शिक्षया क्रमाद्
ययुर्विनेया गणिनां गणेशताम् ॥५३॥

विधौ विधेया मतयो विधेयका
विधाय कम्प्राणि मुखानि कं प्रति ।
वृथा निरीक्षध्वमितस्ततः किमु
ऋते न बोधात् सविधेः शिवाश्रयः ॥५४॥

गुरोर्निषेवा श्रुतदानपूजना
जनाः ! कुरुध्वं स्वगुरूदिताध्वना ।

१ क्षणेन उत्सवेन, अप्रकटम् ईक्षणं दर्शनं येषां ते, ममं= ममत्वं गताः=प्राप्ताः । २ कम्=आत्मानम् आहूय=प्रसाद्य=अभ्य-स्य=प्रत्यक्षीकृत्य । ३ अण्डजानां पक्षे अगमं=वृक्षम् । ४ विधिः क्रिया तत्सहितं बोधं ज्ञानं विना न मुक्तिः ।

कथासु शिष्यध्वमिति प्रमील्य स
परम्परामार्गमचालयद् गणी ॥५५॥
फलग्रहिः शान्तिजिनोदितागमः
क्रमेण शाखाबहुलः स्फुरत्पदः ।
प्रमोदजन्यात् श्रवणेन विश्रुतः
श्रुतस्य सेकाद् बुबुधे नृपाश्रुणः ॥५६॥
दानमदादमदाद् दमदान्ते-
र्दीनदयालुतयाऽवनिपालः ।
शम्यनमे परिमंस्मृतशान्ते-
र्नाम्नि च विस्फुरिते श्रुतियोग्ये ॥५७॥
शैवपदस्य पदव्यवबुद्धा
दुर्णयवर्णितिरेव निषिद्धा ।
रूपमदर्शि धृतोऽस्मि यदर्थं
चेतसि तत् त्वमिहासि स कर्ता ॥५८॥

---

१ जिनोदितागमः नृपाणां=प्रवचनरागाणां प्रमोदाज्ज्ञानाद् अश्रुणः नृपाश्रुणः सेकात्=सेचनात् बुबुधे=प्रबुद्धः=विकस्वरो जातः अन्योऽप्यागमः=तरुः जलसेकाद् विकस्वरः स्यात् । २ पदानि स्थविरकल्पचनाचार्यादीनि, पक्षे पदं=मूलम् । ३ पदवी=मार्गः । ४ चेतसि=चित्ते धृतः, तत्=तस्मात् त्वम् इह कर्ता ईश्वरः ।

देवनृदेवगणः स्तुतिमेवं
तस्य चकार गणेशवरस्य ।
मानसतोऽपि च मा क्षणमात्रं
गच्छ यथेच्छमथेत्यभिधाय ॥५९॥

आनन्दजाश्रुभि[1]रनुस्त्रियमाणमार्गान्
व्यक्तान् पदानि निदधद् बहुवर्णसंघैः ।
चक्रे ह्यनेकप[2]मुखः स गणे गणेशा-
ऽप्यङ्गाश्रितत्रिपदिका[3]गत[4]भूरिलक्ष्म्याः ॥६०॥

लोकाननेकवचनामृतलुप्तदुःख-
प्राक्शोकनिर्गमितनेत्रपयःप्रवाहान् ।
कुर्वन् स सर्वविदनूक्तिरमात् तदोर्व्यां
रेजे सितद्युतिरिवाप्तगणाधिराजः ॥६१॥

पूर्वं रथाङ्गभृति पञ्चमकेऽपि पश्चाद्
रागेण वा भगवति स्मितपाद्मिनीशे ।

---

१ सेव्यमानः मार्गो जैनागमो यस्मिन् ईदृशान् व्यक्तान्=पगिड-तान् चक्रे । २ अनेकान् पानि=रक्षति दयोपदेशाद् ईदृशं मुखं यस्य सः । ३ त्रिपदी=गजाभरणम्, उत्पादव्ययध्रुवरूपा वा । ४ गता=प्राप्ता ।

चक्रे स चक्रनिभचंक्रमणच्छलेन
स्वस्मिन्प्रभाकररुचिं शुचिमण्डलस्थः ॥६२॥
सर्वत्र सार्वगणशासनसार्वभौम-
पट्टस्थितस्य गणिनोऽनुदिनार्चनासु ।
सिद्धिर्भवेद् भविजनस्य पुरःस्थितस्य
नीराजनां जनयतां निजबान्धवानाम् ॥६३॥
श्रीहर्षः कविराजराजिमुकुटालंकारहीरः सुतं
श्रीहीरः सुपुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।

१ श्रीहर्षः पूर्वनाम्नि हीरहर्षनामतः पदैकदेशे पदसमुदायोपचारात्, 'दत्तो देवदत्तः' इति न्यायात् । कविराजराजिमुकुटालंकारहीरः । कः=अग्निर्ब्रह्मा वा विराजो=गरुडः, यक्षराजः, त्रिशिष्टराजो वा, एष राजते शोभते कविराजराजि=स्वर्णं, अग्नेर्हिरण्यरेतस्त्वात्, ब्रह्मणो हिरण्यगर्भत्वात्, विराजे गरुडे स्वर्णकायत्वात्, धनदे स्वर्णाधिकारित्वात्; कनकप्रधानमुकुटालंकारतुल्यः । श्रीहीरः=हीरविजयसूरिः, यं जितेन्द्रियचयं मुनिवर्गं, सुपुवे=प्रसूते स्म जनयामास=उत्पादयामास । च=पुनः मा=लक्ष्मीः=पद्मा तद्रूपा या मल्लदेवी समर्थनाम्नः देवी स्त्री सुपुवे प्रासूत: भ्रातृत्रयरूपमुनिवर्गस्य समर्थसाधुपुत्रत्वात् सौभाग्यदेवीकुक्षिरत्नत्वात् । एतावता श्रीहीरसूरिणा ऐश्वर्यं महाव्रतित्वं स्थापितं दर्शितमिति भावः । सुतं पुत्रं, पक्षे सूर्नामिव, लुप्तोपमा, शिष्ये पुत्रवदाचारात् । तदुक्तो यश्चिन्तामणिमन्त्रः, मध्यमपदलोपात्, तस्य चिन्तनं स्मरणं यस्य, तस्य फलमिव फलं

तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्ग्या महा-
काव्ये चारुणि नैषधीयचरिते सर्गो यमादिर्गतः ।

इति श्रीनैषधीयमहाकाव्यसमस्यायां महोपाध्यायश्रीमेघविजयगणि-
पूरितायां षष्ठः सर्गः संपूर्णः ॥ श्रीः ॥



तस्मिन् । "शृङ्गं चिह्नविषाणाग्र्यांः क्रीडाम्बुयन्त्रे शिखरे प्रभुत्वो-त्कर्षसानुषु" भङ्गिः पुनर्भक्तिवीच्योः" इत्यनेकार्थः ; शृङ्गेषु=शिखरेषु आरं=गतिः=गमना यस्य स मेघः, "गिरौ वर्षति माधवः" इतिवचनात् ; शृङ्गारस्य=मेघस्य भङ्ग्या=तरङ्गेण चारुणि=रम्ये । नैषधकाव्याज्ज्ञातं नैषधीयं तस्यैव चरितं=आचारः=समस्यारूपो यत्र तस्मिन् ; सर्गः, यमाः=अहिंसादयः पञ्च महाव्रतानि सैव संख्या आदिर्यस्य सः=षष्ठः सर्गः संपूर्णः अभवत् ।

## प्रशस्तिः ।



जयति जगति जाग्रज्ज्ञानयोगाद् युगादौ
  जिनवरनवरश्मिर्मार्कदेवादिदेवः ।
तदनु दिनपकान्तिः शान्तिरर्हन् स चक्री
  जिनपतिरपि पार्श्वः शाश्वतश्रीर्विवस्वान् ॥१॥
तदनु दनुजपूज्यस्तीर्थकृद् वीरनामा
  निरुपमसहिमाढ्यः सर्ववित्सार्वभौमः ।
तदनु गणधरालीपूर्वदिग्भानुमाली
  विजयपदमपूर्वं हीरपूर्वं दधानः ॥२॥
कनकविजयशर्माऽस्याऽन्तिषत्प्रौढधर्मा
  शुचिनरवरशीलः शीलनामा तदीयः ।
कमलविजयधीरः सिद्धिसौंसिद्धिवीर-
  स्तदनुज इह रेजे वाचकश्रीशरीरः ॥३॥
चारित्रशब्दाद् विजयाभिधान-
    स्त्रयी सगर्भा धृतशीलधर्मा ।

एषां विनेयाः कवयः कृपाद्याः
पद्यास्वरूपाः समयाम्बुराशौ ॥४॥
तत्पादाम्बुजभृङ्गमेघविजयः
प्राप्तस्फुरद्वाचक-
ख्यातिः श्रीविजयप्रभाख्यभगवत्-
सूरेस्तपागच्छपात् ।
नुन्नोऽयं निजमेरुपूर्वविजय-
प्राज्ञादिशिष्यैरिमां
चक्रे निर्मलनैषधीयवचनैः
श्रीशान्तिचक्रिस्तुतिम् ॥५॥